# विरामकालः
# विनोदसम्पादनार्थं यथा
# तथैव
# धनसम्पादनार्थम् अपि!

विरामकाले प्रभूतः समयः तु भवति एव।
किन्तु तत्काले धनसम्पादनोपायः कथम्?

## अत्रास्ति सुसन्दर्भः। विशेषतः तु
## छात्राणां कृते!

सरला प्रक्रिया। यस्याः कस्याश्चित् भाषायाः चन्दमामायाः वार्षिकग्राहकाः सङ्ग्रहणीयाः। द्वादशसु भाषासु चन्दमामा प्रकाश्यमाना अस्ति। वार्षिकं ग्राहकशुल्कं रू. ४८-००। तत्र दश रूप्यकाणि भवदीयानि एव भवन्ति। वस्तुतः एतावन्तं भागं प्रतिनिधयः अपि न प्राप्नुवन्ति!

## दश चन्दमामाग्राहकान् सङ्गृह्णन्तु।
## शतं रूप्यकाणि अर्जयन्तु।

यावद्वा ग्राहकान् सङ्ग्रहीतुं शक्नुवन्ति भवन्तः। मितिः तु काऽपि नास्ति। अत्याधिकग्राहकशुल्कसङ्ग्रहीतारः दश जनाः चन्दमामाविद्यार्थिवेतनं प्राप्स्यन्ति। ततः शतं जनाः चन्दमामा-टीशर्ट् प्राप्स्यन्ति। भवतां वाणिज्यकौशलस्य जनसम्पर्ककलायाः च अभिवर्धनार्थम् एषा योजना।

किं भवन्तः आसक्ताः? तर्हि विद्याभ्यासस्य विवरणेन, पासपोर्ट्-आकारस्य भावचित्रद्वयेन च सह अधोनिर्दिष्टसङ्केताय पत्रं लिखन्तु। अचिरात् एव भवन्तः परिचायकपत्रं ग्राहकशुल्कसङ्ग्रहपत्रं च प्राप्स्यन्ति।



**चन्दमामा**

**Chandamama Subscription**
**Promotion Cell**

188, N.S.K. Salai, Vadapalani, Madras-600 026.


MAGGI CLUBBERS FUN LOVERS
MAGGI CLUB
मैगी-जिगृसा-पज़ल् इत्यनेन सार्धं मैगी-पराक्रम-विश्वं सम्यक् संयोजयन्तु।
मैगी-स्काई-ब्लेज़र इति भवतः क्रीडायां घनेषु आरुह्य विहरन्तु।
मैगी-एस्-एड्वेन्चरर्स् क्रीडायां सागरतो नभस्तलपर्यन्तं आरोहणाभियानं पूर्णतां नयन्तु।
मैगी-हू-डन्-इट्- क्रीडायां चौरं निगृह्णन्तु।
विनोदप्रियाणां कृते आश्चर्यकराः पराक्रमाः!
मैगी-क्लब्- सदस्येभ्यः निःशुल्कं उपहाराः।
मैगी-रेडर्स-ऑफ-द-रेड्-स्टार इति भवतः क्रीडायां चातुर्यपूर्णान् अनभिज्ञान् विरुध्य भवतो विनोदित्वं तोलयन्तु।
भो बालाः! मैगी-क्लब्-सदस्याः भवन्तु तथा मैगी-जगतः पराक्रमेषु प्रविशन्तु।
एतत् केवलं मैगीनूडल्स्-रिक्त-पिष्टिकातः पञ्च-प्रथमावरणात् कर्त्तयित्वा स्व-मनोनुकूलं उपहारमधिगन्तुं प्रत्येकं अस्मान् प्रेषयन्तु। षट्सु अष्टसु वा सप्ताहेषु भवन्तो मैगीक्लबतः भवद्रुचेः अनुकूलं आमोदभरितं लोभहर्षकं उपहारं अवाप्स्यन्ति।
स्मर्त्तव्यमिदं यत् स्वमनोनुकूलोपहारेण सार्धं स्वनाम-धामसंकेत-जन्मतिथि मपि अस्मान् प्रेषयन्तु। यदि भवान् मैगी-क्लब्-सदस्यो नास्ति, तदपि भवतः कृते स्वर्णिमोऽयमवसरः। यदा उपरितन - विवरणं प्रेषयति भवान् तदा केवलं सदस्यतावाप्तये निवेदयतु। अपि च, वयं भवतः उपहारेण सार्धं निःशुल्कं मैगी-क्लब्-सदस्यतापत्रमपि प्रेषयिष्यामः।
निःशुल्कं मैगी 'वर्ल्ड आफ एनीमल्स' प्रश्नमाला! प्रत्येकमपि उपहारद्रव्यं, यद् भवान् अधिगच्छति, तेन सार्धं निःशुल्कं मैगी-'वर्ल्ड आफ एनीमल्स' -प्रश्नमालामपि भवान् अधिगन्तुमर्हति।
अस्माकं संकेतोऽस्ति
MAGGI CLUB
P.O. Box 5788 New Delhi-110 055
MAGGI 2-minute noodles

# चन्दमामा

अगस्ट्-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००

# चन्दमामा

संस्थापकः – 'चक्रपाणिः'    सञ्चालकः – 'नागिरेड्डी'


## संविधानस्य नवीकरणम्

पञ्चाशद्वर्षेभ्यः पूर्वं– तन्नाम १९४२ तमे वर्षे अगस्ट्मासे ८ दिनाङ्के– भारतीय-राष्ट्रिय-कांग्रेस्संस्थया महात्मगान्धिवर्यस्य नायकत्वे आंग्लसर्वकारः उक्तः यत् 'निर्गच्छन्तु भारतात्' (Quit India) इति। भारतीयस्वातन्त्र्येतिहासे प्रधानः घट्टः एषः। अतः एतस्य ऐतिहासिकस्य विशिष्टसन्दर्भस्य स्मरणं योग्येन क्रमेण कर्तुं प्रयत्नः प्रचलन् अस्ति इदानीम्।

पूर्वं प्रस्तुतायाः घटनायाः अनन्तरं यावत् पञ्च वर्षाणि अतीतानि तावता भारतं स्वतन्त्रम् अभवत्। सर्वस्य अपि राष्ट्रस्य संविधानम् अतिपवित्रा सम्पत्तिः। तथापि कदाचित् संविधाननिर्मातृभिः एव चिन्त्यते यत् संविधाने परिवर्तनं करणीयम् अस्ति इति, नूतनम् एव संविधानम् आरचनीयम् इति वा। सद्यः एव बहुधा विभक्तस्य सोवियत्देशस्य कानिचन गणराज्यानि सम्भूय नूतनं संविधानम् अङ्गीकृतवन्ति यत्; जर्मनीदेशौ एकं सामान्यं संविधानम् अङ्गीकृत्य विलीनौ जातौ यत्; युगोस्लावियादेशेन नूतनसंविधानम् अङ्गीकृतं यत्; काम्बोडियादेशः थाय्ल्याण्ड्देशः च स्वसंविधानस्य पुनारचनार्थं प्रयतमानौ स्तः यत् तानि एतानि पूर्वप्रस्तुतस्य विषयस्य कानिचन उदाहरणानि।

भारतीयं संविधानं १९५० तमे वर्षे रचितम्। गतेषु ४२ वर्षेषु षष्टिवारम् एतस्य परिष्कारा: कृताः। केचन संविधानवेत्तारः अभिप्रयन्ति यत् तादृशः समयः इदानीम् आगतः अस्ति, यत्र च संविधानस्य पुनरवलोकनं क्रियेत, परिष्कृतम् अन्यत् एव अङ्गीक्रियेत वा, येन च राष्ट्रं प्रगत्युन्मुखं शान्तियुक्तं समृद्धं च स्यात् इति।

यदा संविधानविषये अस्माभिः चिन्त्यते तदा सगौरवं साभिमानं च संविधाननिर्माता डा. अम्बेडकर्वर्यः स्मर्यते एव, यस्य च जन्मशतकोत्सवः सद्यः एव आचरितः। वयम् आशास्महे यत् भाविसंविधाननिर्मातारः तदेव कुर्युः, यच्च देशस्य हिताय स्यात् इति।


सम्पुटः–९    अगस्ट्–१९९२    सञ्चिका–५

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिक ग्राहकशुल्कं रू. ४८-००




# नामनिर्वचनम्-१

(निर्वचनं नाम शब्दानाम् अवयवार्थस्य निरूपणम्। नामपदेन अत्र सुबन्ताः विवक्षिताः। अस्मिन् विभागे सुबन्तानाम् अवयवार्थस्य निरूपणं क्रियते। आदौ तु संज्ञाशब्दानाम् (पुरुषाणां स्त्रीणां च) अवयवार्थाः निरूप्यन्ते।)

**रामः-** (रमु-क्रीडायाम्। रम्+घञ्) रमन्ते योगिनः अस्मिन् इति रामः। यस्मिन् परमात्मनि योगिनः रमन्ते, परमानन्दम् अनुभवन्ति सः रामः। परमात्मा इत्यर्थः। दशरथस्य ज्येष्ठपुत्रे एषः शब्दः रूढः। सुन्दरः इत्यादयः चतुर्दश अन्ये अर्थाः कोशकारैः दर्शिताः।

प्रसिद्धम् इदं पद्यम्– रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।
इति रामपदेनासौ परं ब्रह्माभिधीयते॥

**कृष्णः–** (कृषु-विलेखने। कृष्+नक्(न)) कर्षति अरीन् इति कृष्णः। शत्रून् आकृष्य यः मारयति सः कृष्णः। वसुदेवस्य पुत्रे रूढः एषः शब्दः। एतस्य एव पदस्य अर्जुनः, व्यासः इत्यादयः सप्तविंशतिः अर्थाः सन्ति।

**विश्वनाथः–** विशति स्वकारणम् इति विश्वम्। प्रपञ्चः इत्यर्थः। प्रपञ्चः स्वस्य कारणं मायोपहितचैतन्यं प्रविशति इति वेदान्तप्रक्रिया। नाथति ईश्वरो भवति इति नाथः। स्वामी इत्यर्थः। विश्वस्य नाथः विश्वनाथः। प्रपञ्चस्य स्वामी जगदीश्वरः इत्यर्थः।

**सीता–** (षिञ्-बन्धने। षि+क्तः) सीयते इति सीता। हलेन कर्षणे या रेखा भवति सा सीता। पुत्रार्थी जनकमहाराजः यागं कर्तुं क्षेत्रं कृष्टवान्। तदा हलकर्षणरेखातः जनकः स्त्र्यपत्यं (सीतां) प्राप्तवान्। अतः एव सीता इति नाम जातम्।

**पार्वती–** पर्वति पूरयति इति पर्वतः (पर्व+अतच्)। (पर्वाणि भागाः सन्ति अत्र (पर्व+तप् इति वा) गिरिः इत्यर्थः। पर्वतस्य अपत्यं स्त्री (अण्) पार्वती। पर्वतराजस्य पुत्री इत्यर्थः।

---

**सूचना–** *भवन्तः कस्यचित् नाम्नः अर्थं ज्ञातुम् इच्छन्ति चेत् कृपया लिखन्तु। निर्वचनं कृत्वा अत्र प्रकाशयिष्यामः।*

**सङ्केतः- संस्कृतचन्दमामा 'अक्षरम्' ८ क्रास्, गिरिनगरं II फेस्, बेङ्गलूरु-५६००८५.**

# प्राचीननाम्ना नूतनं राष्ट्रमण्डलम्



गते एप्रिल्मासे २७ तमे दिनाङ्के भारतादिपञ्चाशद्देशानां समक्षं 'युगोस्लाविया फेडरल् पार्लिमेण्ट्' समावेशः प्रवृत्तः। तत्र नूतनस्य संविधानस्य घोषणा अभवत्।

पूर्वं युगोस्लावियाराष्ट्रमण्डले षट् गणतन्त्रराज्यानि आसन्। वर्षात् पूर्वं चत्वारि गणतन्त्रराज्यानि राष्ट्रमण्डलतः पृथग्भूय स्वतन्त्राणि जातानि। अतः इदानीं तस्मिन् राष्ट्रमण्डले सेर्विया माण्टेनीग्रो इत्येते द्वे गणतन्त्रराज्ये अवशिष्टे। एतन्निमित्तं तत्र षण्मासान् यावत् जातिद्वेषनिमित्तकानि विध्वंसकृत्यानि प्रवृत्तानि। बहवः गृहविहीनाः परिवारविहीनाः च जाताः। बहवः प्रतिवेशिदेशेषु वसतिम् आरब्धवन्तः।

अत्रान्तरे युरोपियन्जनतया पञ्चदशवारं शान्तिप्रस्तावपत्रे हस्ताङ्कनं कारितम्। किन्तु केषुचित् एव दिनेषु सन्धिभङ्गः भवति स्म। अन्ते संयुक्तराष्ट्रसङ्घेन निर्णीतं यत् एतेषु राज्येषु शान्तेः स्थापनार्थं शान्तिसुरक्षादलं प्रेषणीयम् इति। एतदनुगुणं गतस्य मार्च्मासस्य पूर्वार्धे सप्तदशदेशीयैः १४,००० सैनिकैः युक्ता सेना प्रेषिता, यस्याश्च नायकः आसीत्— भारतीयः लेप्टिनेण्ट् जनरल् सतीश नम्बियार्।

एतस्मिन् एव सन्दर्भे मुस्लिम्बहुले बोस्नियाहेर्जेगोविना गणतन्त्रे जनमतसंग्रहणं प्रवृत्तम्। तदा अधिकसङ्ख्याकाः जनाः बोस्नियागणतन्त्रस्य स्वातन्त्र्यम् एव पुरस्कृतवन्तः। अतः तत् गणतन्त्रं स्वतन्त्रं जातम्। तस्य परिणामतः मुस्लिम्जनानां क्रोट्-सेर्ब्जनानां च मध्ये परस्परं कलहः प्रवृत्तः।

बोस्नियाराज्यम् अनुसरद्भिः क्रोषिया-स्लावेनिया-मसेडोनियागणतन्त्रैः स्वातन्त्र्यं घोषितम्। मसेडोनियागणतन्त्रं युरोपियन्-समुदायस्य स्वीकारं प्रतीक्षमाणं तिष्ठति।

चतुर्णां गणतन्त्रदेशानां निर्गमनतः द्वयोः गणतन्त्रदेशयोः राष्ट्रमण्डलं पुनः निर्मितम्। अत्र एतादृशं राष्ट्रमण्डलघटनं तृतीयवारं प्रवृत्तम्। प्रथमवारं तु— प्रथमजागतिकयुद्धस्य (१९१४-१८) अनन्तरं १९१७ तमे वर्षे

'कोर्फु'सन्धेः अनुगुणं सेर्ब्-क्रोट्-स्लावेनीजनाः मिलित्वा वासम् आरब्धवन्तः। १९१८ तमे वर्षे डिसेम्बर्मासे प्रथमे दिनाङ्के एषः सन्धिः व्यवहारान्वितः अभवत्। १९२९ तमे वर्षे 'युगोस्लाविया' इति नामकरणम् अपि जातम्। द्वितीयं जागतिकयुद्धं यदा आरब्धं तदा हिट्लरनेतृकेण जर्मनीदेशेन युगोस्लाविया आक्रान्ता। मार्षल्टिटोवर्यः जर्मनीसैन्यं ततः निवार्य कम्यूनिस्ट् फेडरल् रिपब्लिक् व्यवस्थाम् आनीतवान्, स्वयं तस्याः प्रधानमन्त्री जातः अपि। १९५३ वर्षे सः तस्य देशस्य अध्यक्षः अपि जातः। १९७४ तमे वर्षे षड्गणतन्त्रराष्ट्रोपेतायाः सोषलिस्ट् फेडरेषन् व्यवस्थायाः अनुगुणं युगोस्लावियादेशस्य नूतनं संविधानं निर्मितम् अभवत्।

१९८० तमे वर्षे यदा टिटोवर्यः दिवंगतः तदा एतस्मिन् देशे आर्थिकक्लेशाः समुत्पन्नाः, प्रादेशिककलहः, जातिविवादः इत्यादयः प्रवृद्धाः। अस्थिरता अशान्तिः च पराकाष्ठां गता।

एतस्मिन् एव काले तत्र सशस्त्रसैन्यस्य शासनम् आरब्धम्। तस्य च निरङ्कुशव्यवहारतः तत्रत्या परिस्थितिः पूर्वापेक्षया अपि विषमतां गता।

इदानीं सेर्बिया-माण्टोनीग्रोगणतन्त्रभ्यां युक्ते युगोस्लावियादेशे पूर्वतनराष्ट्रमण्डलस्य ४४% जनसङ्ख्या अवशिष्टा अस्ति, ५५% प्राकृतिकी सम्पत्तिः च अवशिष्टा अस्ति। इतः परं युगोस्लावियादेशे चिरकालं यावत् शान्तिः तिष्ठतु इति आशास्महे वयम्।





# वरनिर्णयः

शरणपुरनामके ग्रामे विशालः मालती चेति दम्पती आस्ताम्। तयोः एकमात्रपुत्री मैथिली। ताभ्यां पुत्री महत्या प्रीत्या पालिता आसीत्। तथैव तस्यै योग्यं शिक्षणम् अपि दत्तम् आसीत्। मैथिली तु गुणवती बुद्धिमती च। अन्यच्च विशालस्य सम्पत्तेः उत्तराधिकारिणी मैथिली एव खलु? अतः 'स्नुषात्वेन एषा प्राप्तव्या' इति बहवः इच्छन्ति स्म।

विशालस्य बान्धवेषु त्रयः विवाहयोग्याः तरुणाः आसन्। तेषां नाम आसीत्— जानकीरमाणः, सूर्यदेवः, चन्द्रकान्तः चेति। तेषां मातरः इच्छन्ति स्म यत् मैथिली स्नुषात्वेन आनेतव्या इति। सूर्यदेवः चन्द्रकान्तः च धनिककुले जातौ। जानकीरमणः तु मध्यमवर्गीयकुले जातः। सूर्यदेवस्य अपेक्षया चन्द्रकान्तः सुन्दरः। अतः मैथिल्याः मात्रा मालती चिन्तयति स्म यत् चन्द्रकान्तः एव मम पुत्र्याः निमित्तं योग्यः वरः इति।

पत्न्याः आशयं जानन् विशालः कदाचित् पुत्रीम् आहूय उक्तवान्— "वत्से! अस्माकं बान्धवेषु जानकीरमणः, सूर्यदेवः, चन्द्रकान्तः इति त्रयः विवाहयोग्याः तरुणाः सन्ति इति, ते त्रयः अपि भवतीं परिणेतुं सिद्धाः इति च भवती जानाति एव खलु? भवत्याः मातुः इच्छा यत् तेषु अन्यतमाय चन्द्रकान्ताय भवती दातव्या इति। मम दृष्ट्या तु ते त्रयः अपि समानाः एव। भवती तु बुद्धिमती विवेकिनी च। अतः भवती एव विचिन्त्य कथयतु— तेषु भवत्याः इष्टतमः कः इति। यस्मिन् भवत्याः प्रीतिः तस्मै भवतीं दत्त्वा विवाहं निर्वर्तयिष्यामि" इति।

पित्रा कृतं विवाहप्रस्तावं श्रुत्वा लज्जाम्

"श्रीमाता"



अनुभवन्ती अपि मैथिली उक्तवती– "तात! निर्णयकथनात् पूर्वं मया तेषां योग्यता-स्वभावादिकं परिशीलनीयं खलु? एतया दृष्ट्या अद्यावधि ते मया न परीक्षिताः" इति।

एतत् श्रुत्वा क्षणकालं विचिन्त्य उक्तवान् विशालः– "युगादिपर्व आसन्नम् अस्ति। तत्सन्दर्भे तान् त्रीन् गृहं प्रति आह्वास्यामि। तदा भवती परीक्ष्य निर्णयं श्रावयतु" इति।

युगादिपर्वदिनार्थं विशालः तान् त्रीन् अपि परिवारान् स्वगृहं प्रति आहूतवान्।

युगादिपर्वदिने सूर्यदेवादयः त्रयः अपि उपस्थिताः। स्नानादिकं समाप्य विशालेन दत्तानि नूतनानि वस्त्राणि धृतवन्तः ते। अत्रान्तरे मल्लिकामालाविक्रयिका बालिका गृहसमीपम् आगता। तस्याः ध्वनिं श्रुत्वा मैथिली गृहात् बहिः आगतवती। मालाविक्रयिकाम् आहूतवती च।

तदा तत्रैव स्थितः सूर्यदेवः उक्तवान्– "गृहं परितः बहूनि पुष्पसस्यानि सन्ति। गृहे पुष्पाणि अपि सन्ति एव। एवं स्थिते अपि पुनः पुष्पाणां क्रयणस्य का आवश्यकता?" इति।

एतत् श्रुत्वा जानकीरमणः हसन् उक्तवान्– "गृहे बहुविधानि पुष्पाणि स्युः नाम। किन्तु मल्लिकापुष्पं तु न दृश्यते खलु? अतः क्रीणातु नाम सा" इति उक्त्वा– "द्विहस्तमितां मालां ददातु" इति पुष्पविक्रयिकाम् उक्त्वा धनं दातुम् उद्युक्तः।

तावता चन्द्रकान्तः– "अये, द्विव्याममितां मालां ददातु तावत्" इति मालाविक्रयिकाम् उक्त्वा, जानकीरमणम् उद्दिश्य– "पर्वदिने पुष्पक्रयणं युक्तम् एव। किन्तु तत्र कृपणता किमर्थम्? औदार्येण धनव्ययं करोतु तावत्" इति उक्त्वा मालाविक्रयिकायै धनं दत्त्वा तां प्रेषितवान्।

चन्द्रकान्तस्य कथनेन जानकीरमणः न खिन्नः। सः हसन् पुनः उक्तवान्– "गृहे विद्यमानाभ्यां द्वाभ्यां महिलाभ्यां धर्तुं द्विहस्तमिता माला पर्याप्ता खलु? धनस्य अपव्ययः न उचितः" इति।

"अल्पः व्ययः अपव्ययः कथं भवेत्? कृपणताबुद्धिः भवतः" इति उपहासपूर्वकम् उक्तवान् चन्द्रकान्तः।

चन्द्रकान्तेन सह सूर्यदेवः अपि हसितवान्। जानकीरमणः मौनम् आश्रितवान्।

त्रयाणाम् अपि कथनं श्रुत्वा मन्दहासं प्रकटयन्ती मैथिली मालां स्वीकृत्य अन्तः गतवती।

पुनः अल्पे एव काले शाटिकाविक्रयिकः शाटिकानां ग्रन्थिं शिरसि आरोप्य विशालस्य गृहम् आगतवान्। तं दृष्ट्वा आश्चर्येण पृष्टवान् विशालः– "पर्वनिमित्तम् अस्माभिः शाटिका क्रीता एव। पुनः किमर्थम् अद्य आगतः भवान्?" इति।

"नूतनाः शाटिकाः आगताः सन्ति। ताः दृष्ट्वा अहं मैथिलीं स्मृतवान्। अतः तस्यै प्रदर्शयितुम् आगतः" इति उक्तवान् सः शाटिकाविक्रयिकः।

यावत् विशालः पुनः किञ्चित् वक्तुम् उद्युक्तः तावता चन्द्रकान्तः उक्तवान्– "अये, शाटिकाः प्रदर्शयतु तावत्" इति।

अत्रान्तरे शाटिकाविक्रयिकस्य ध्वनिं श्रुत्वा बहिः आगतवती मैथिली। तां दृष्ट्वा उक्तवान् चन्द्रकान्तः– "एषः वदति यत् नूतनाः शाटिकाः आनीताः इति। दृष्ट्वा या भवत्यै रोचते तां स्वीकरोतु तावत्" इति।

"सद्यः एव पित्रा पर्वनिमित्तं शाटिकाद्वयं क्रीतम् एव। पुनः नूतनशाटिकायाः क्रयणस्य का आवश्यकता?" इति उक्तवती मैथिली।

तदा चन्द्रकान्तः हसन् उक्तवान्– "पर्वनिमित्तं मम उपायनं मत्वा एकां



शाटिकां स्वीकरोतु तावत्" इति।

तदा जानकीरमणः उक्तवान्– "पर्वनिमित्तं क्रीतं शाटिकाद्वयं मैथिल्याः सकाशे अस्ति एव। पुनः नूतनायाः शाटिकायाः क्रयणस्य का आवश्यकता? शाटिकार्थं यावत् दीयते तेन धनेन अन्यत् किमपि क्रीत्वा दत्तं चेत् वरं खलु?" इति।

"अन्यस्य क्रयणं पुनः चिन्तयाम तावत्। इदानीं तु शाटिकां क्रीत्वा दास्यामि" इति उक्त्वा चन्द्रकान्तः अधिकमूल्यकाम् एकां शाटिकां चितवान्।

सा शाटिका मैथिल्यै अरोचत। चन्द्रकान्तः शाटिकाविक्रयिकाय धनं दत्त्वा तं प्रेषितवान्। गर्वदृष्ट्या जानकीरमणं दृष्टवान् च।



तस्मिन् दिने सायङ्कालसमये जानकीरमणः, सूर्यदेवः, चन्द्रकान्तः च विपणिं गत्वा प्रत्यागतवन्तः। विपणितः प्रत्यागतः जानकीरमणः एकं काव्यग्रन्थं मैथिल्यै उपायनरूपेण अर्पितवान्।

तं ग्रन्थं दृष्ट्वा मैथिली आश्चर्येण जानकीरमणं पृष्टवती– "प्राचीनकवि-निर्मितानि काव्यानि मह्यं रोचन्ते इति कथं ज्ञातवान् भवान्?" इति।

"प्रातः भवती प्रतिवेशिनीं सखीं वदन्ती आसीत्– बहु अन्विष्टं चेदपि एषः ग्रन्थः विपण्यां न प्राप्तः इति, एतस्य कवेः ग्रन्थाः नितरां रोचन्ते इति च। विपण्यां मया एषः ग्रन्थः यदा दृष्टः तदा भवत्याः वचनं स्मृतम्। अतः एतं ग्रन्थं क्रीतवान् अहम्। मम प्रेमपूर्वकम् उपायनम् एतत्" इति उक्तवान् जानकीरमणः।

रात्रौ भोजनस्य अनन्तरं गृहस्य पृष्ठभागतः वार्तालापध्वनिः मैथिल्या श्रुतः। सा तत्रैव स्थितवती।

"जानकीरमण! भवतः सकाशे धनं नास्ति इत्यत्र अहं न विश्वसिमि" इति उक्तवान् चन्द्रकान्तः।

"वस्तुतः अपि इदानीं मम समीपे धनं नास्ति। सायं विशालवर्यः मत्तः द्विशतरूप्यकाणि स्वीकृतवान्। अनिवार्यः व्ययः कश्चन आपतितः इति तेन उक्तम्। अतः भवान् सूर्यदेवं पृच्छतु" इति उक्तवान् जानकीरमणः।

"सूर्यदेवः नितरां कृपणः। धनं तु सः प्राणात् अपि प्रियतरं भावयति। सः कथं वा धनं दद्यात्?" इति कोपेन उक्तवान् चन्द्रकान्तः।

एतत् सम्भाषणं श्रुत्वा मैथिली गृहस्य अन्तः गतवती। अनन्तरदिने सा पितरम् एकान्ते पृष्टवती– "तात! भवान् जानकीरमणतः धनं स्वीकृतवान् वा?" इति।

विशालः आश्चर्येण पृष्टवान्– "एतत् कथं जानाति भवती?" इति।

तदा मैथिली आत्मना श्रुतं सम्भाषणं विस्तरेण श्रावितवती। तदा विशालः– "वस्तुतः तु अहं तु जानकीरमणतः

किञ्चिदपि धनं न स्वीकृतवान्। किन्तु सः माम् उक्तवान् आसीत् यत् चन्द्रकान्तः सूर्यदेवः वा आगत्य यदि पृच्छेतां– 'जानकीरमणतः धनं स्वीकृतं वा?' इति, तर्हि भवता– 'आं, द्विशतरूप्यकाणि स्वीकृतानि' इति वक्तव्यम् इति। एवं कथनेन मम तु काऽपि हानिः नास्ति इत्यतः अहम् एतत् अङ्गीकृतवान्। एतदनन्तरं चन्द्रकान्तः यदा मां पृष्टवान् तदा अहं जानकीरमणेन यथा सूचितं तथैव उक्तवान्। एषा वस्तुस्थितिः'' इति उक्त्वा उच्चैः हसितवान्।

एतत् वचनं श्रुत्वा मैथिली सन्तुष्टा अभवत्। सा पितरं सूचितवती– ''अद्य भवान् जानकीरमणं वदतु यत् मह्यं द्विशतरूप्यकाणि ऋणरूपेण ददातु इति'' इति।

तदा विशालः आश्चर्येण पृष्टवान्– ''अहम् ऋणं स्वीकुर्याम्? कदापि न। ऋणस्य का आवश्यकता इदानीम्?'' इति।

''तात! मम वचनानुसारं भवान् धनं प्रार्थयतु। यदि सः दद्यात् तर्हि स्वीकरोतु च'' इति उक्त्वा ततः गतवती मैथिली।

अनन्तरदिने जानकीरमणः, सूर्यदेवः, चन्द्रकान्तः च स्वगृहं गतवन्तः। तेषां निर्गमनस्य अनन्तरं द्विशतरूप्यकाणि पुत्र्यै यच्छन् उक्तवान् विशालः– ''एतत् धनं स्वीकरोतु। यदा मया पृष्टं तत्समनन्तरम् एव सः धनं दत्तवान्, प्रत्यर्पणे त्वरा प्रदर्शनीया



नास्ति इति उक्तवान् च'' इति।

एतत् श्रुतवत्याः मैथिल्याः मुखे प्रसन्नताभावः प्रसृतः। अतः कुतूहलेन पृष्टवान् विशालः– ''वत्से! वरपरीक्षा समाप्ता वा? वरपरीक्षायाम् उत्तीर्णः जानकीरमणः एव वा?'' इति।

मैथिली लज्जया शिरः अवनमय्य उक्तवती– ''जानकीरमणः एव मह्यम् अरोचत'' इति।

पितापुत्र्योः वचनम् अनतिदूरे स्थित्वा शृण्वती मालती पुत्रीं पृष्टवती– ''वत्से! जानकीरमणे भवत्या किं वैशिष्ट्यं दृष्टं, चन्द्रकान्ते च कः दोषः दृष्टः?'' इति।

विशालः सकृत् पत्न्याः मुखं दृष्ट्वा पुनः

पुत्रीं पश्यन् उक्तवान्– "वत्से! केन कारणेन जानकीरमणः भवत्या इष्टः इति मातरं वदतु तावत्" इति।

तदा मैथिली मन्दहासपूर्वकं मातरं पश्यन्ती उक्तवती– "धनसम्पादनं तु बहवः कुर्युः। धनं कथं व्ययीक्रियते इति दृष्ट्वा योग्यता निर्णीयते। चन्द्रकान्तः धनस्य अपव्ययं करोति। सूर्यदेवश्च नितरां कृपणः। किन्तु जानकीरमणः विवेकी। व्ययः कथं करणीयः इति सम्यक् जानाति सः। यावत् आवश्यकं तावत् एव व्ययं करोति सः। चन्द्रकान्तः आत्मनः श्रेष्ठतां प्रदर्शयितुं मह्यं शाटिकां क्रीत्वा दत्तवान्। किन्तु अनन्तरं सः जानकीरमणतः ऋणं प्राप्तुम् उद्युक्तः। एतादृशाय ऋणं दत्तं चेत् तत् न प्रत्यागच्छति इति जानन् जानकीरमणः उपायेन ऋणदानं निराकृतवान्। किन्तु पित्रा यदा ऋणं पृष्टं तदा झटिति दत्तवान् सः। परोक्षरूपेण मम आसक्तिं ज्ञात्वा उत्तमं पुस्तकम् आनीय उपायनीकृतवान् सः। एतादृशः जानकीरमणः एव योग्यः पतिः भवेत्। यदि अहम् अनुचितम् आवश्यकम् इति वदेयं तर्हि सः मां निगृह्णीयात्। उचितं यदि प्रार्थयेयं तर्हि आनीय दद्यात् अपि। सः चन्द्रकान्तवत् सुन्दरः न चेदपि असुन्दरः तु न। अतः जानकीरमणः एव चितः मया। अम्ब! मया उचितं कृतं खलु?" इति।

मालती किमपि न उक्तवती। पत्न्याः मौनप्रतिक्रियां दृष्ट्वा हसन् उक्तवान् विशालः– "किं वदेत् भवत्याः माता? तया एवं दूरालोचनं न कृतम् एव" इति।

तदा मन्दहासेन स्वकीयं-कोपं गोपयन्ती मालती– "एवं दूरालोचनं मया न कृतम् आसीत्, सत्यम्। भवता अपि कृतं न आसीत् खलु? अतः किं मम निन्दनेन? मैथिली मम अपि पुत्री एव। तस्याः श्रेष्ठता, यथा भवतः तथा ममापि अभिमानाय एव" इति उक्त्वा पाकशालां गतवती।

एतत् वचनं श्रुत्वा पुत्री पिता च मन्दहासं प्राप्तवन्तौ।





# माया-भवनम्

## ३

(वीरगिरिराज्यस्य राजकुमारी अकस्मात् अस्वस्था जाता। ग्रहगतिकारणतः एव जातम् इति ज्ञातम्। राजधानीसमीपे स्थितस्य सारससरोवरस्य मध्ये स्थिते विश्रान्तिभवने राजकुमार्याः वसत्यर्थं व्यवस्था कृता। आस्थानज्योतिषिकस्य सूचनायाः अनुगुणं राजा राज्ञी च द्विवारं राजकुमारीं दृष्ट्वा आगतवन्तौ। किन्तु तृतीयवारं ताभ्यां यदा गतं तदा विश्रान्तिभवने राजकुमारी न आसीत्। राजकुमार्याः अपहरणं तु एवं प्रवृत्तम्।.....)

मध्यरात्रे युवराज्ञी विद्यावती आश्चर्यम् अनुभवन्ती शय्यायाम् उपविश्य परितः दृष्टवती।

"युवराज्ञि! उत्तिष्ठतु। अविलम्बेन आवाभ्यां राजभवनं प्रति गन्तव्यम् अस्ति" इति राजकुमारीम् उत्थाप्य उक्तवती आसीत् वृद्धपरिचारिका कमला।

"राजभवनं प्रति गमनम्? तदपि मध्यरात्रे? किमर्थम् एवम्?" इति आश्चर्येण पृष्टवती विद्यावती।

"महाराजः तीव्रम् अस्वस्थः इति, सः अविलम्बेन भवतीं द्रष्टुम् इच्छति इति च श्रूयते। भवतीं नेतुं नाविकः सन्नद्धः अस्ति" इति आतङ्कमिश्रितेन स्वरेण उक्तवती कमला।

वृद्धपरिचारिकायाः केशाः विकीर्णाः आसन्। दीपप्रकाशः अपि मन्दः आसीत्। अतः तस्याः मुखं स्फुटं न दृश्यते स्म।



''ज्योतिषाचार्येण उक्तम् आसीत् खलु– मया एतस्मात् विश्रान्तिभवनात् कदापि कुत्रापि न गन्तव्यम् इति?'' इति उक्तवती विद्यावती।

''आम्। किन्तु प्रवृत्तं तु एवम्– भवतीं द्रष्टुं राजा राज्ञी च उद्युक्तौ आस्ताम्। किन्तु तावता राजा अज्ञातेन व्याधिना ग्रस्तः सन् अधः पतितवान्। अल्पे एव काले सचेतनः सन् सः आज्ञापितवान् यत् विद्यावती त्वरया अत्र आनेतव्या इति। राजाज्ञानुगुणम् आवां गच्छन्तौ स्वः। चिन्ता मास्तु भवत्याः। श्वः प्रातः आवां प्रत्यागमिष्यावः'' इति उक्तवती कमला।

विद्यावती परिचारिकया सह भवनात् बहिः आगतवती। आकाशः मेघैः आच्छन्नः आसीत्। परिचारिका अन्येन मार्गेण विद्यावतीं नीतवती। प्रकाशाभावतः आतङ्ककारणतः एषः अंशः विद्यावत्या न लक्षितः। कमला अग्रे गत्वा नौकायाम् उपविष्टवती। हस्तसाहाय्येन राजकुमारीम् अपि अन्तः उपवेशितवती। नौका ततः प्रस्थिता।

युवराज्ञी निद्रां प्रयत्नेन निवारयन्ती नौकायाः कोणे उपविष्टा अस्ति। पार्श्वे उपविष्टा कमला मौनम् आश्रितवती अस्ति। 'पिता कथम् अस्वस्थः जातः? इदानीं तस्य स्वास्थ्यं कथं स्यात्?' इति चिन्तयन्ती अस्ति राजकुमारी। चिन्तामग्ना सा एतत् न लक्षितवती यत् तीरप्राप्तौ विलम्बः जायमानः अस्ति इति।

अपरतीरे शिबिका आसीत्। पार्श्वे एव शिबिकावाहकाः भटाः आसन्। राजकुमारी यदा शिबिकायाम् उपविष्टवती तदा ते शिबिकाम् उन्नीय प्रस्थितवन्तः। 'कमला शिबिकाम् अनुसरन्ती पादाभ्याम् आगच्छन्ती स्यात्' इति आलोचितवती विद्यावती। उपविष्टा एव सा अल्पां निद्रां प्राप्तवती।

किञ्चित्कालानन्तरं शिबिकायाः कम्पनतः राजकुमारी जागरिता अभवत्। 'किमर्थम् एवम्?' इति चिन्तयन्ती सा जवनिकाम् अपसार्य बहिः दृष्टिं

प्रसारितवती। राजभवनमार्गः निम्नोन्नतः न आसीत्। एषः मार्गः तु नितरां निम्नोन्नतः अस्ति। अरण्यमार्गेण गमनं दृश्यते। राजभवनमार्गे अरण्यं तु न आसीत्। 'शिबिकावाहकाः माम् अन्यत्र कुत्रापि नयन्तः सन्ति' इति ज्ञातवती सा। भीता सा 'कमला कुत्र?' इति दृष्टवती। शिबिकायाः पृष्ठतः पुरतः पार्श्वे वा कमला न दृष्टा। 'किमर्थम् एवम्? किं प्रचलत् अस्ति?' इति न ज्ञातवती राजकुमारी।

किञ्चित्कालानन्तरं शिबिकावाहकाः स्थितवन्तः। शिबिकां भूमौ स्थापयित्वा पार्श्वे स्थितवन्तः।

"युवराज्ञि! शिबिकातः अवतरतु तावत्" इति निर्भावस्वरेण उक्तवती काचित् स्त्री।

विद्यावती शिबिकातः बहिः आगत्य परितः दृष्टिं प्रसारितवती। परितः घोरम् अरण्यम्। पुरतः च विशालं भवनं दृष्टम्। पार्श्वे स्थितां स्त्रियं सूक्ष्मदृष्ट्या परिशीलितवती विद्यावती। सा यद्यपि कमला इव दृश्यते स्म, तथापि 'एषा कमला न' इति ज्ञातवती विद्यावती। 'एषा कमला इव व्यवहरन्ती मां वञ्चनया अत्र आनीतवती' इति ज्ञातवती सा।

"युवराज्ञि। अग्रे गच्छाव तावत्। इतः परं भवत्याः वासः अत्रैव" इति उक्तवती सा स्त्री।

"इदानीम् अहं कुत्र अस्मि?" इति



पृष्टवती युवराज्ञी। किन्तु सा स्त्री किमपि उत्तरं तु न उक्तवती।

"अयि, भवती का? मां किमर्थम् अत्र आनीतवती भवती? 'मम पिता अस्वस्थः' इति उक्तवती आसीत् खलु भवती? मम पिता कुत्र? एषः प्रदेशः कः? एतत् भवनं कस्य? मां वञ्चनया किमर्थम् अत्र आनीतवती?" इति कोपेन पृष्टवती युवराज्ञी।

"युवराज्ञि! मयि कोपः मास्तु। अहं भवत्याः सर्वेषां प्रश्नानाम् उत्तरं वक्तुम् असमर्था अस्मि। एतस्य भवनस्य नाम 'मायाभवनम्' इति एतावदेव वदामि। इतोऽपि अधिकं ज्ञातुं प्रयत्नं मा करोतु



कृपया। अन्यदपि जानातु यत् एतस्मिन् भवने भवत्याः कोऽपि अपायः तु न भविष्यति इति। भवत्याः कोऽपि क्लेशः यथा न स्यात् तथा व्यवस्थाम् अहं करिष्यामि। निश्चिन्ता भवतु भवती" इति उक्तवती सा स्त्री।

"मया अत्र कियत्कालं स्थातव्यम्? का भवती?" इति पृष्टवती युवराज्ञी।

"यावत् मम स्वामी इच्छति तावत् भवत्या अत्र स्थातव्यम्। मां तु 'कमला' इति नाम्ना एव आह्वयतु भवती" इति उक्तवती सा स्त्री।

"भवत्याः स्वामी कः?" इति पृष्टवती विद्यावती।

"सः कः इति कालान्तरे भवती एव स्वयं ज्ञास्यति। अलं व्यर्थचर्चया। इदानीम् अन्तः गच्छतु भवती। विश्रान्तिभवने भवत्याः निद्रा विच्छिन्ना आसीत्। इदानीं सा निद्रा अनुवर्तताम्" इति उक्तवती सा स्त्री।

अनन्तरं सा शिबिकावाहकान् दृष्ट्वा उक्तवती– "भवन्तः गन्तुम् अर्हन्ति" इति। ते शिबिकावाहकाः विनयेन तां नमस्कृत्य ततः निर्गतवन्तः।

सा स्त्री अग्रे गच्छन्ती– "गच्छाव तावत्" इति युवराज्ञीम् उक्त्वा मायाभवनस्य सोपानानि आरोढुम् उद्युक्ता अभवत्। अनन्यगतिका युवराज्ञी विद्यवती मौनं ताम् अनुसृतवती।

मायाभवनं मनोहरम् आसीत्। विशालाः प्रकोष्ठाः प्रशालाः च आसन्। स्तम्भेषु विविधानि चित्राणि चित्रितानि आसन्। स्तम्भेषु दर्पणाः अपि आसन्। सा स्त्री भवनस्य गोपुरभागम् अतिक्रम्य प्रधानभागस्य सोपानसमीपं गतवती। सोपानानि आरुह्य भवनस्य उपरिभागे स्थितं विशालप्रकोष्ठं प्राप्तवती। स च प्रकोष्ठः अमूल्यैः रत्न-माणिक्यादिभिः अलङ्कृतः आसीत्। विविधैः पुष्पैः अपि विशेषालङ्कारः कृतः आसीत्। सर्वाणि वस्तूनि विशिष्टया कान्त्या विलसन्ति स्म। भित्तिषु तत्र तत्र दर्पणाः योजिताः आसन्।

तस्य प्रकोष्ठस्य मध्ये रमणीयं तल्पम्। तत् तल्पं प्रदर्शयन्ती युवराज्ञीम् उक्तवती सा



प्राप्तव्याः भवेयुः इति न जाने' इति बहवः विचाराः युवराज्ञ्याः मनसि आगताः।

* * * *

सेनाध्यक्षः उग्रसेनः महाराज्ञ्याः वज्रेश्वरीदेव्याः सहोदरः। महाराजेन प्रेषितः नाविकः राजाज्ञां यदा निवेदितवान् तदा सः आश्चर्येण स्तब्धः अभवत्। सारससरोवरस्थे विश्रान्तिभवने काचित् अहितकरी घटना घटिता स्यात् इति झटिति ज्ञातवान् सः। अतः सः झटिति ततः प्रस्थितवान्।

विश्रान्तिभवनस्य सोपानानि यदा आरूढानि तदा तत्र श्मशानमौनम् आसीत्। राजा राज्ञी परिचारिका च परस्परं मुखं पश्यन्तः म्लानवदनाः सन्तः उपविष्टवन्तः आसन्।

सेनाध्यक्षः उग्रसेनः राजानं नमस्कृत्य पृष्टवान्– "प्रभो, विद्यावती कुशलिनी खलु? सा इदानीं कुत्र?" इति।

"सा इदानीम् अत्र कुत्रापि न दृश्यते, उग्रसेन" इति उक्तवान् राजा।

"मम पुत्री कुत्रापि न दृश्यते भोः। मम प्रियपुत्री कुत्रापि न दृश्यते। रात्रौ सा किञ्चित्कालं यावत् अत्र शयनं कृतवती स्यात्। अनन्तरं तु .... अनन्तरं तु ...." इति वदन्ती उच्चैः रोदनं कृतवती महाराज्ञी। दुःखोद्वेगकारणतः सा अग्रे किमपि वक्तुं न शक्तवती।

अधिकं विवरणं ज्ञातुम् इच्छन् उग्रसेनः

स्त्री– "युवराज्ञि! भवती अत्र सुखेन शयनं करोतु। यावत् अहं पुनः आगत्य भवतीं न उत्थापयेयं तावत् सुखेन शयनं करोतु भवती" इति।

'प्रतिरोधेन किमपि प्रयोजनं नास्ति' इति चिन्तयित्वा युवराज्ञी तल्पे शयनं कृतवती। नेत्रे निमीलिते अभवताम्। 'एषा स्त्री मां किमर्थम् अत्र आनीतवती? इदानीं पितुः कीदृशी स्थितिः स्यात्? विश्रान्तिभवने माम् अपश्यतोः मातापित्रोः कीदृशं दुःखं भवेत्? माम् अपश्यन्त्याः वृद्धपरिचारिकायाः कमलायाः कीदृशी गतिः स्यात्? अये भगवन्! कमलां मम मातापितरौ च रक्षतु। एतस्मिन् मायाभवने कीदृशाः घोराः अनुभवाः

कमलां प्रश्नार्थकदृष्ट्या दृष्टवान्।

तदा कमला उक्तवती– "आर्य! अहं पार्श्वप्रकोष्ठे शयनं कृतवती आसम्। राजकुमारी कदा सुप्तवती, कदा वा प्रकोष्ठात् बहिः आगतवती, इतः कदा कुत्र गतवती इति किमपि न ज्ञातवती अहम्। यदा जागरणं प्राप्तं तदा दिग्भ्रान्ता अहं सर्वत्र अन्वेषणं कृतवती। तावता राजा राज्ञी च अत्र आगतौ। राजकुमारी कथम् अदृश्या अभवत् इति तु न ज्ञायते" इति।

सर्वं श्रुत्वा सेनाध्यक्षः नाविकं तीक्ष्णदृष्ट्या दृष्टवान्। तदा नाविकः उक्तवान्– "प्रभो, ह्यः परिचारिके एतत् तीरं प्रापय्य अहम् अपरतीरे एव आसम्। ततः कुत्रापि न गतः। रात्रौ नौकायाम् एव मया शयनं कृतम्। युवराज्ञी कथम् इतः अदृश्यतां गता इति तु न ज्ञायते" इति।

क्षणकालस्य अनन्तरम् उग्रसेनः महाराजम् उक्तवान्– "प्रभो, भवनतः गमनार्थं नौकायाः आश्रयणम् अनिवार्यम्। अन्या नौका तु अत्र न आसीत्। अतः राजकुमारी नौकया इतः स्वयं गतवती न स्यात्। तरणेन गमनम् अपि असाध्यम् एव। कथमपि विश्रान्तिभवनं प्रविश्य कश्चित् मधुरैः बचनैः बशीकृत्य, खड्गादिना भीतिं जनयित्वा वा ताम् अपहृतवान् स्यात्। राजकुमार्याः अपहरणं जातम् इत्यत्र नास्ति सन्देहः" इति।

राजा मन्त्रिणः वचनम् अङ्गीकुर्वन् विना शब्दं मन्दं शिरः चालितवान्।

परिचारिकां कमलां– 'विश्रान्तिभवने एव भवतु भवती' इति उक्त्वा राजा राज्ञी, सेनाध्यक्षः च नौकायाम् उपविष्टवन्तः। नौका ततः निर्गता। 'विद्यावत्याः इदानीं कीदृशी स्थितिः स्यात्? कः ताम् अपहृतवान् स्यात्? किमर्थम् अपहृतवान् स्यात् सः? राजकुमार्याः रक्षणार्थम् इदानीं किं करणीयम्? सा कुत्र अस्ति इति कथं ज्ञातव्यम्? इति चिन्तयन्तः ते त्रयः राजभवनं प्राप्तवन्तः।

–(अनुवर्तते)



# उभौ चोरौ

कस्यचित् भूस्वामिनः आम्रोद्याने आम्रवृक्षेषु बहूनि फलानि फलितानि आसन्। वृक्षेषु यावन्ति पर्णानि ततोऽप्यधिकतया फलानि आसन्। अतः बहूनां दृष्टिः उद्याने पुनः पुनः पतति स्म। चौर्यम् अपि तदा तदा प्रचलति स्म। प्रतिदिनं शताधिकानि आम्रफलानि चोरितानि भवन्ति स्म। भूस्वामी उद्यानरक्षकम् आदिष्टवान् यत् रक्षणकार्ये विशेषजागरूकता आश्रयणीया इति।

कदाचित् आम्रफलानां चौर्ये रतः कश्चन दशवर्षीयः बालः उद्यानरक्षकेण दृष्टः। सः झटिति गत्वा बालकं गृहीतवान्। कोपमिश्रितेन स्वरेण पृष्टवान् च– "अरे, कः भवान्? दर्शनेन तु भाति यत् वीरसिंहस्य पुत्रः भवान् इति। सत्यं वा? वदतु रे" इति।

बालकः भीत्या कम्पमानः "आम्" इति वदन् अङ्गीकारपूर्वकं शिरः चालितवान्। तदा उद्यानरक्षकः कोपेन पुनः उक्तवान्– "अये दुष्ट! तिन्त्रिणीशलाकया सम्यक् ताडितं चेदेव विवेकः प्राप्येत भवता। अहं स्वयं ताडयामि उत, भवतः पितुः द्वारा ताडयामि?" इति।

बालकः रोदनमिश्रितेन स्वरेण उक्तवान्– "भवान् मा ताडयतु। मम पितुः द्वारा ताडयतु" इति।

"अस्तु तर्हि। भवतः पितुः समीपम् एव गच्छाव तावत्" इति वदन् बालकस्य हस्तं गृहीत्वा प्रस्थितवान् उद्यानरक्षकः।

"तिष्ठतु। अहं पितरम् आह्वयामि तावत्" इति उक्त्वा सः बालः पितरम् आहूतवान्– "तात! तात!" इति।

अपरक्षणे उद्यानस्थात् अन्यस्मात् वृक्षात् बालस्य पिता वीरसिंहः भीत्या अवतीर्य अधः आगतवान्। तस्य पृष्ठभागे आम्रफलैः पूर्णा गोणी अपि आसीत्!






# रूपपरिवर्तनम्

आरब्धं प्रयत्नं त्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनं श्मशानमार्गम् अनुसृतवान्। तदा शवान्तर्गतः बेतालः अवदत्– "अये राजन्! अस्मिन् मध्यरात्रे भवता शयनमन्दिरे सुखेन निद्रा करणीया आसीत्। किन्तु भवान् अस्मिन् घोरश्मशाने बहूनि कष्टानि सम्मुखीकुर्वन् अस्ति। मनुष्यस्य यावान् वा विवेकः भवतु, तथापि कदाचित् प्रधानविषये अपि निर्णय-स्वीकरणसमये तस्य विवेकहीनता दृश्यते बहुत्र। तत्र कारणस्य अन्वेषणं बहु कष्टकरम्। एतस्य उदाहरणार्थं एकां कथां वदामि। पूर्वं कदाचित् सूर्यवर्मा अपि चन्द्रप्रभायाः परिणयविषये एवमेव व्यवहृतवान्। तस्य व्यवहारेण सः विवेकहीनः इति ज्ञायते। भवतः मार्गायासस्य

## वेतालकथा



परिहारार्थं सूर्यवर्मणः कथां श्रावयामि। श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं बेतालेन कथा आरब्धा–

मालवदेशं पूर्वं वीरसिंहः नाम राजा पालयति स्म। तस्य एकः एव पुत्रः आसीत्। तस्य नाम सूर्यवर्मा इति। वीरसिंहः यदा वृद्धः जातः तदा चिन्तितवान्– 'युक्ते वयसि सूर्यवर्मणः पट्टाभिषेकं कृत्वा विवाहम् अपि निर्वर्तयामि चेत् मम कर्तव्यं समाप्तं भवति' इति।

युवराजस्य सूर्यवर्मणः विवाहार्थं वध्वाः अन्वेषणस्य आवश्यकता न आसीत्। यतः कुन्तलदेशस्य युवराज्ञी चन्द्रप्रभादेवी युवराजः च परस्परम् इच्छतः स्म। चन्द्रप्रभायाः पिता अपि एतयोः विवाहार्थम् अनुमतिं दत्तवान् आसीत्। किन्तु सभापुरोहितः एव एकवर्षपर्यन्तं विवाहार्थम् उत्तमः मुहूर्तः नास्ति इति उक्तवान् आसीत्। तदर्थं एव विवाहविषये विलम्बः क्रियमाणः आसीत्।

एवं सति एकस्मिन् दिने युवराजः सूर्यवर्मा विदूषकेण सह रथद्वारा वनं प्रति विहारार्थं गतवान्।

रथः अरण्यमार्गेण गच्छति स्म। परितः विविधाः वृक्षाः, मृगपक्षिणां विविधाः कलरवाः च श्रूयन्ते स्म। एतत्सर्वं सूर्यवर्मणः आह्लादकरम् आसीत्। मध्ये मध्ये विदूषकस्य हास्यकणिकाः अपि युवराजं हासयन्ति स्म। एवं सन्तोषेण प्रयाणं कुर्वन् अस्ति युवराजः।

एवम् आदिनं सन्तोषम् अनुभूय सूर्यवर्मा सूर्यास्तपर्यन्तम् अरण्ये अटन् 'रात्रितः पूर्वं नगरं प्राप्तव्यम्' इति विचिन्त्य सारथिम् आज्ञप्तवान्– ''शीघ्रं गच्छतु'' इति। तदा सारथिः वेगेन अश्वं चालितवान्। अश्वाः वायुवेगेन अरण्यमार्गेण धावितुम् उद्युक्ताः अभवन्।

अत्रान्तरे अकस्मात् मार्गे किञ्चिद् दूरे गजानां 'घीं'कारः श्रुतः। तत् श्रुत्वा झटिति रथाश्वौ द्वौ अपि भीतौ। रथं मार्गमध्यतः मार्गपार्श्वं नीत्वा भीत्या यत्रकुत्रापि धावितुम् आरब्धवन्तौ। अश्वयोः नियन्त्रणं कर्तुं न

शक्तवान् सारथिः।

अकस्मात् प्रवृत्तम् एतत् दृष्ट्वा सूर्यवर्मा विदूषकः च किमपि कर्तुम् अशक्तौ मूर्च्छितौ। किञ्चित्कालानन्तरं तौ स्वयं सचेतनौ जातौ। रथं गृहीत्वा दृढं उपवेष्टव्यम्, उत रथात् अधः उत्प्लवनं करणीयम् इति यावत् तौ चिन्तयन्तौ आस्तां, तावति काले रथचक्रं एकेन वृक्षेण घट्टितम् अभवत्। रथः पार्श्वे विद्यमाने पङ्के निमग्नः जातः। सारथिः विदूषकः च पार्श्वे विद्यमानेषु गुल्मेषु पतितौ। गुल्मपार्श्वे विद्यमाने सरोवरे सूर्यवर्मा पतितः।

किञ्चित्कालानन्तरं जलेन आर्द्रः, शैत्येन कम्पमानः सूर्यवर्मा सरोवरतः उत्थाय आगतवान्। तस्य शरीरं शैत्येन कम्पमानम् आसीत्।

सारथिः विदूषकः चापि अल्पप्रमाणेन व्रणितौ आस्ताम् एव। तथापि तौ कथमपि उत्थाय स्थितवन्तौ।

उत्थितौ तौ सूर्यवर्माणं दृष्टवन्तौ। दर्शनसमनन्तरम् एव आश्चर्येण स्तब्धौ जातौ। 'किम् एतत्? कथम् एवं भवितुम् अर्हति?' इति एतेन भावेन तौ परस्परं दृष्टवन्तौ।

आश्चर्यचकितौ तौ दृष्ट्वा सूर्यवर्मा पृष्टवान्– "किमर्थं विचित्ररीत्या भवन्तौ मां पश्यतः? मयि किमपि परिवर्तनं जातम् वा?" इति।

एवं कथयन् सः स्वस्य ध्वनिं श्रुत्वा नितराम् आश्चर्यचकितः। यतः तस्य ध्वनौ





युवतिरूपं प्राप्तम् इति वार्ता राजधान्यां सर्वत्र प्रसृता।

"अस्माकं सूर्यवर्मा इदानीं सूर्यप्रभा जातः अस्ति" इति नगरे जनाः तस्य उपहास कुर्वन्ति स्म।

सूर्यवर्मा लज्जया तस्मिन् दिने गृहतः बहिः एव न आगतः। जनानां पुरतः आगन्तुम् एव लज्जितः भवति स्म सूर्यवर्मा।

समग्रं शरीरं स्त्रीरूपं चेदपि सूर्यवर्मणः मनः शरीरानुगुणं न परिवृत्तम् आसीत्। मनः पूर्वतनस्य सूर्यवर्मणः अनुगुणम् एव चिन्तयति स्म। अतः सूर्यवर्मा अतीव कष्टम् अनुभवति स्म।

राजा राज्ञी च पुत्रस्य अवस्थां दृष्ट्वा चिन्ताक्रान्तौ जातौ। 'यस्य च विवाहः महता वैभवेन करणीयः इति चिन्त्यमानम् अस्ति, तादृशः पुत्रः एव स्त्रीरूपं प्राप्य लज्जया गृहात् बहिः आगन्तुम् अपि न इच्छति' इति तु तयोः महते खेदाय। यत् राजकुटुम्बं पूर्वं जनानाम् आदरपात्रम् आसीत् तदेव इदानीम् उपहासपात्रं जातम् अस्ति। एतत् स्मरन् राजा सदा खेदं प्राप्नोति।

परिवर्तनं जातम् आसीत्। महिलाध्वनिः इव तस्य ध्वनिः कोमलः आसीत्। आश्चर्यम् अनुभवन् सः सूर्यवर्मा स्वशरीरं परीक्षितवान्। तस्य हस्तयोः कङ्कणम् आसीत्। शरीरे शाटिका चोलः च आसीत्। पादयोः नूपुरः आसीत्। पुष्टौ बाहू इदानीं सुकोमलौ जातौ आस्ताम्। "अहम् इदानीं स्त्रीत्वेन परिवर्तितः" इति सूर्यवर्मा खिन्नः। किं करणीयम् इति अजानन् सूर्यवर्मा रथम् आरुह्य लज्जया शिरः अवनमय्य राजप्रासादम् आगतवान्।

पुत्रे यत् रूपपरिवर्तनं जातं तत् दृष्ट्वा राजा वीरसिंहः राज्ञी च नितरां दुःखितौ जातौ। यदा सूर्योदयः जातः तदा सूर्यवर्मणा

एकस्मिन् दिने राजा वीरसिंहः आस्थानस्य ज्योतिषिकम् आहूय उक्तवान्– "मम पुत्रः अकस्मात् स्त्रीरूपेण परिवृत्तः अस्ति एतत् तु नितराम् अपमानकरम्। व्ययः यावान् वा भवतु। तद्विषये चिन्ता मास्तु। सः पूर्वतनं स्वरूपं यथा प्राप्नुयात्, तथा करोतु कृपया"

इति।

तदा ज्योतिषिकः उक्तवान्– "महाराज, भवतः राजधान्याः ईशान्यदिशि घोरम् अरण्यम् अस्ति। तस्मिन् अरण्ये एकः मायासरोवरः अस्ति। केचन एव जनाः तं विषयं जानन्ति। कस्यचित् यक्षस्य शापकारणतः तस्मिन् मायासरोवरे पतितः पुरुषः स्त्रीरूपं प्राप्नोति। महिला यदि तत्र पतति, तर्हि पुरुषरूपेण परिवृत्ता भवति। भवतः पुत्रः प्रमादवशात् तस्मिन् सरोवरे पतितः सन् स्त्रीरूपं प्राप्तवान्। एषा विधिलीला एव। इदानीं किमपि कर्तुं न शक्यते" इति।

ज्योतिषिकस्य वचनं श्रुत्वा वीरसिंहः अतीव खिन्नः। एतादृशपरिस्थितौ किं करणीयम् इति न ज्ञातवान् सः। एवं बहुधा चिन्तयन् सः अन्ते वार्ताहरद्वारा कुन्तलदेशस्य महाराजाय एकं पत्रं प्रेषितवान्– "महाराज, विधिवशात् मम पुत्रः स्त्रीरूपं प्राप्तवान् अस्ति इति प्रायशः भवान् जानाति एव। अतः युवराज्ञीं चन्द्रप्रभां परिणेतुं मम पुत्रः अनर्हः जातः अस्ति। कृपया क्षन्तव्यः अहम्" इति।

एतस्य पत्रस्य उत्तररूपेण युवराज्ञी चन्द्रप्रभा एव सूर्यवर्मणे एकं पत्रं लिखित्वा वार्ताहरद्वारा प्रेषितवती। पत्रे एवं लिखितम् आसीत्– "युवराज, यदि भवान् इच्छति, तर्हि अहं मायासरोवरे अवतीर्य पुरुषरूपं



प्राप्नोमि। तदा आवां पतिपत्नीरूपेण जीवनं कर्तुं शक्नुवः" इति।

सूर्यवर्मा तत् पत्रं पठित्वा मात्रे पित्रे च दत्तवान्। तौ पत्रं पठित्वा सूर्यवर्माणम् उक्तवन्तौ– "वत्स, एतेन पत्रेण ज्ञायते यत् चन्द्रप्रभा भवन्तम् अतीव इच्छति इति। वस्तुतः भवान् भाग्यशाली। भोः, चन्द्रप्रभया उक्तं भवतः सम्मतं किल!" इति।

तदा स्त्रीरूपः सूर्यवर्मा उक्तवान्– "चन्द्रप्रभायाः अभिप्रायः मह्यं न रोचते। यदि अहं तस्याः परिणयम् अङ्गीकरोमि तर्हि पुनरपि नूतनाः समस्याः उत्पन्नाः भवन्ति। अन्यं कमपि योग्यं वरं परिणीय सुखेन जीवतु सा। मया सह तस्याः विवाहः न समीचीनः।

अतः अद्य एव चन्द्रप्रभायै पत्रं लिखित्वा मम आशयं निवेदयिष्यामि'' इति।

वेतालः एवं कथां समाप्य अवदत्– ''सूर्यवर्मा किमर्थम् एतादृशं निर्णयं स्वीकृतवान्? यदि सूर्यवर्मा वस्तुतः चन्द्रप्रभाम् इष्टवान्, तर्हि सः 'अन्यं कमपि वृणोतु भवती' इति किमर्थं तस्यै पत्रं लिखितवान्? 'चन्द्रप्रभा पुरुषरूपं प्राप्य यदि मम पतिः भवेत् तर्हि मया पत्नीत्वं प्राप्नुवता तस्याः अधीनत्वम् अङ्गीकरणीयं भवेत्। तदा मम पुरुषत्वस्य अपमाननम्' इति चिन्तितवान् स्यात् वा? अनुरागः उत्कटः यदि स्यात् तर्हि केनापि रूपेण चन्द्रप्रभां परिणेतुं सिद्धः स्यात्। स तु पत्रं लिखितवान्– अन्यं कञ्चित् परिणयतु इति। एतस्मात् ज्ञायते यत् चन्द्रप्रभाविषये सूर्यवर्मणः प्रबलः अनुरागः न आसीत् इति। एवं न वा? जीवने परिणयार्थं यः अवकाशः प्राप्तः आसीत् तं स्वयं दूरीकृतवान् सूर्यवर्मा। एतेन सूर्यवर्मा विवेकहीनः इति ज्ञायते किल!. एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''सूर्यवर्मणः निर्णयस्य मूलं कारणं किम् इति ज्ञाने विशेषक्लेशः नास्ति। तस्य कार्यकारणसम्बन्धः अपि स्पष्टः एव अस्ति। शरीरेण स्त्रीरूपं प्राप्य मनसा पुरुषरूपेण जीवनम् अतीव कष्टकरम् इति सूर्यवर्मा जानाति। यदि चन्द्रप्रभा मायासरोवरे अवतीर्य पुरुषरूपेण परिणमति तर्हि सा अपि मानसिकवेदनया पीडिता भवति। सूर्यवर्मा चन्द्रप्रभाम् अतीव इच्छति। अतः एव तां कष्टे पातयितुम् न इच्छति सूर्यवर्मा। अतः चन्द्रप्रभायाः अभिप्रायं निराकृतवान् सः। एवं सूर्यवर्मणा स्वीकृते निर्णये विवेकहीनता वा अहङ्कारः वा कोऽपि नास्ति'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतःवेतालः ततःअदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# बालकविः

मन्दारपुरे कश्चन भूस्वामी आसीत्। कविषु तस्य विशेषादरः। प्रतिवर्षं सः वसन्तोत्सवम् आयोजयन् कवीनां सम्माननं करोति स्म। कवीनां पुत्राः अपि केचन सभायां पद्यानि पठन्तः सभासदः भूस्वामिनं च तोषयन्ति स्म।

कदाचित् भूस्वामिना आयोजिते वसन्तोत्सवे कवितागोष्ठ्यां त्रयः बालकवयः स्वरचितानि पद्यानि पठितवन्तः। तानि पद्यानि श्रुत्वा सर्वे सभासदः सन्तुष्टाः अभवन्।

पद्यरचनासमर्थान् बालकवीन् पुरस्कुर्वन् महता सन्तोषेण भूस्वामी उक्तवान्– ''वंशपारम्पर्येण कवित्वं प्राप्तवन्तः एते त्रयः मम प्रियाः'' इति।

तदा सचिवः उक्तवान्– ''श्रीमन्! एते तु ज्येष्ठान् अनुकुर्वन्तः किञ्चित् उक्तवन्तः। कवितां तु प्रतिभाशालिनः केवलं रचयितुं शक्नुवन्ति। प्रतिभा तु जन्मसिद्धा भवति। एते बालकवयः कविपरिवारे जाताः इत्यतः परिसरस्य प्रभावतः कवित्वम् अल्पं प्रदर्शयेयुः नाम। किन्तु ये कल्पनाशीलाः भवन्ति ते एव वास्तविकाः कवयः। ये अन्यस्य अनुकरणं कुर्वन्ति, स्वकल्पनाशक्तेः उपयोगं न कुर्वन्ति ते भाविनि काले कविः इति प्रसिद्धिं प्राप्तुं न अर्हन्ति'' इति।

तदा भूस्वामी उक्तवान्– ''भवता सम्यक् उक्तम्। एते भाविनि काले कवयः भवेयुः उत न इति अहम् एव कालान्तरे परीक्ष्य ज्ञास्यामि'' इति।

ततः मासद्वयम् अतीतम्। भूस्वामिनः जन्मदिनस्य आचरणम् आगतम्। जन्मदिनोत्सवदिने आम्रोद्याने विशेष-भोजनस्य व्यवस्था कृता आसीत्। कवयः

पण्डिताः च तस्मिन् कार्यक्रमे उपस्थिताः आसन्। भूस्वामिना पुरस्कृताः त्रयः बालकवयः अपि उपस्थिताः आसन्।

भोजनकार्यक्रमः समाप्तः। तत्समये चन्द्रः आकाशस्य मध्यभागम् आगतः आसीत्। भूस्वामी तान् त्रीन् बालकवीन् स्वसमीपम् आहूय पृष्टवान्– "पश्यन्तु तत्र! आकाशे अर्धचन्द्रः विलसति खलु? तं दृष्टवतां भवतां मनसि का भावना उत्पद्यते?" इति।

त्रयः अपि क्षणकालम् अर्धचन्द्रं दृष्टवन्तः।

"भगवतः शङ्करस्य जटाजूटे स्थितः अर्धचन्द्रः आकाशम् आगत्य कटाक्षवीक्षणं करोति इव भासते" इति उक्तवान् एकः बालकविः।

"मम तु भाति यत् आकाशम् आगतः चन्द्रः जन्मदिनोत्सवार्थं ज्वालितेषु दीपेषु कान्तिं वर्धयितुं स्वकीयम् अर्धम् अर्पितवान् अस्ति इव इति" इति उक्तवान् अपरः बालकविः।

उभयोः बालकव्योः उत्प्रेक्षां श्रुत्वा भूस्वामी, तत्र सम्मिलिताः अन्ये च सन्तोषं प्राप्तवन्तः।

भूस्वामी तृतीयं बालकविं पश्यन् उक्तवान्– "अर्धचन्द्रस्य दर्शनतः किं भासते? वदतु तावत्" इति।

तदा तृतीयः बालकविः क्षणकालम् आकाशस्थम् अर्धचन्द्रं दृष्ट्वा उक्तवान्– "अहं तु बालकविः। अतः मम तु भाति यत् आकाशस्थः एषः चन्द्रः सुमधुरं भक्ष्यम् इव अस्ति इति" इति।

पूर्वं वर्णनं कृतवद्भ्यां बालकविभ्यां ज्येष्ठान् अनुकुर्वद्भ्यां प्रौढतया वर्णनं कृतम् आसीत्। तृतीयः बालकविः तु स्ववयोनुगुणप्रतिभया कल्पनां कृत्वा वर्णनं कृतवान् आसीत्।

अतः सन्तुष्टः भूस्वामी तम् आशिषा अनुगृह्णन् उक्तवान्– "वत्स! वास्तविकः बालकविः भवान्। भाविनि काले उत्तमः कविः सन् कीर्तिं प्राप्नोतु" इति।





## अस्मद्देशीया पशुपक्षिसम्पत् –

# खड्गमृगः

भारतम्, इण्डोनेशिया, आफ्रिका इत्यादिषु देशेषु खड्गमृगः दृश्यते। खड्गमृगाः पञ्चविधाः भवन्ति। तेषु अन्यतमाः भारतीयाः खड्गमृगाः सुप्रसिद्धाः। आफ्रिकाखड्गमृगाः, श्वेतखड्गमृगाः, जावाखड्गमृगाः, सुमात्राखड्गमृगाः चेति अन्ये चत्वारः प्रकाराः। विकृताकाराणां खड्गमृगाणां वैशिष्ट्यं यत् एतेषां नासिकायाः उपरि शृङ्गं भवति। भारतीयाः खड्गमृगाः एकशृङ्गवन्तः चेत् आफ्रिकादेशीयाः द्विशृङ्गवन्तः। खड्गमृगशृङ्गं न अस्थिमयम्! मुखे जातानि रोमाणि एव परस्परसंलग्नानि भूत्वा शृङ्गाकारतां प्राप्नुवन्ति। एतेषां कर्णौ परितः, पुच्छान्ते च रोमाणि दृश्यन्ते। एतेषां शरीरं सुमहत्। दैर्घ्यं च १०८ सें.मी. स्यात्।

केचन विश्वसन्ति यत् खड्गमृगस्य शृङ्गम् औषधगुणयुक्तम् इति। अतः शृङ्गाणां निमित्तम् एतेषां मारणं प्रचलति। अतः एव एतेषां सङ्ख्यायां दिने दिने ह्रासः दृश्यते। अतः सङ्ख्यया क्षीयमाणानाम् एतेषां रक्षणार्थं सर्वकारेण वन्यपशुसंरक्षणकेन्द्रेषु विशेषव्यवस्था कृता अस्ति। तादृशानि केन्द्राणि – कजिरङ्गा, जल्दापाडा, गोरुमारा, सोनायीरूपायी इत्यादीनि। इतिहासपूर्वकाले अपि खड्गमृगाः जीवन्ति स्म इत्यत्र प्रमाणानि उपलभ्यन्ते।

वार्ताविषया: बाला:–



शास्त्रीयसङ्गीतं यथाक्रमं बोधितवान्। जानपदसङ्गीतं पाश्चात्यसङ्गीतं चापि परिचायितवान्।

विद्यालयम् अपि अगच्छन्ती श्रीलेखा वर्षद्वयं यावत् अचलश्रद्धया सङ्गीताभ्यासं कृतवती। चलनचित्राणि पश्यन्ती सा चित्रसङ्गीतं सदा शृणोति स्म। ऋते सङ्गीतात् अन्यत् किमपि तस्यै न रोचते स्म। तस्याः अपूर्वं सङ्गीतज्ञानं दृष्ट्वा सन्तुष्टः मरकतमणिः ताम् आत्मना सह ध्वनिग्रहणमन्दिरं नयति स्म।

कदाचित् ध्वनिग्रहणसन्दर्भे वाद्यवृन्दे भागं वोढुं श्रीलेखां सूचितवान् मरकतमणिः। श्रीलेखा पियानोवाद्यस्य वादने नैपुण्यं प्राप्तवती आसीत्। अतः सा वाद्यवादने उद्युक्ता अभवत्। तमिळुकविना विरचितस्य गीतस्य निमित्तं सा निमेषत्रयाभ्यन्तरे स्वरसंयोजनं कृतवती। तस्याः एताम् अपूर्वप्रतिभां

# अल्पवयस्का चित्रसङ्गीतनिर्देशिका

आन्ध्रप्रदेशस्य पश्चिमगोदावरीमण्डले लघुनगरे जाता पञ्चवर्षीया काचित् बालिका मातापितरौ अनुक्त्वा एव कदाचित् मद्रासनगरं गतवती। सा प्रियान् गीतकारान् सङ्गीतनिर्देशकान् च द्रष्टुम् इच्छति स्म।

एवं सप्तभ्यः वर्षेभ्यः पूर्वं गृहात् निर्गता सा बालिका तेलुगुगीतस्य निमित्तं सङ्गीतनिर्देशनं कृतवती, यच्च गीतं प्रसिद्धगायिकया चित्रानामिकया गीतम्। एतस्याः सङ्गीतनिर्देशिकायाः इदानीं वयः द्वादश वर्षाणि! तस्याः च नाम श्रीलेखा इति।

सप्तभ्यः वर्षेभ्यः पूर्वं पञ्चवर्षीया एषा यदा मद्रासनगरम् आगतवती तदा आरक्षकाः तां गृहीत्वा मातापित्रोः समीपं प्रेषितवन्तः। पुत्र्याः सङ्गीतप्रेम दृष्ट्वा मातापितरौ चकितौ, अग्रे किं करणीयम् इति चिन्तनं कृतवन्तौ च। तदा तयोः बन्धुः सङ्गीतनिर्देशकः मरकतमणिः श्रीलेखायाः शिक्षणभारं वोढुं सिद्धः अभवत्। सः श्रीलेखां

दृष्ट्वा सङ्गीतविद्वांसः अपि आश्चर्यचकिताः अभवन्। सङ्गीतविद्वांसः श्रीलेखया कृतं स्वरसंयोजनं दृष्ट्वा उक्तवन्तः यत् शास्त्रीय-जानपद-पाश्चात्यसङ्गीतानाम् अपूर्वं मेलनम् अस्ति अत्र इति। सङ्गीतनिर्देशकेषु अल्पवयस्का एषा एव। अतः एतस्याः नाम गिन्नीसपुस्तके अचिरात् एव योजितं भवेत्।

श्रीलेखा इच्छति यत् स्वनाम्ना सह हितचिन्तकस्य शिक्षकस्य नाम्नः अपि सम्बन्धः स्यात् इति। अतः सा स्वनाम 'मणिमेखला' इति परिवर्तितवती अस्ति। श्रीलेखायाः सङ्गीतनिर्देशनेन युक्तं चलचित्रं सद्यः एव द्रष्टुं शक्येत।

आधुनिकेन वेषेण भूषिता एषा ललाटे सदा तिलकं धरति। पूजामन्दिरे अधिकं कालं यापयति अपि। चाकलेहस्य पयोहिमस्य (ऐसक्रीम्) च खादने एतस्याः विशेषरुचिः। अवकाशः यदा प्राप्यते तदा केरम्क्रीडायां निरता भवति अपि एषा।

# भवन्तः जानन्ति वा?

१. केरलेषु युगाद्युत्सवः 'विषु'नाम्ना आचर्यते। तस्मिन् एव दिने उत्तरपूर्वभारते कस्मिंश्चित् राज्ये अन्यनाम्ना वर्षारम्भः आचर्यते। तस्य उत्सवस्य नाम किम्? तस्य राज्यस्य च नाम किम्?
२. 'मे'दिवसः यस्मिन् दिने आचर्यते तस्मिन् एव दिने कस्यचित् क्रैस्तमतीयस्य श्रेष्ठपुरुषस्य स्मरणं क्रियते। सः श्रेष्ठपुरुषः कः?
३. बौकेफालानगरं विश्वप्रसिद्धं नामद्वयं स्मारयति। तत् नामद्वयं किम्?
४. सा क्रीडा का, यस्यां च तैललिप्तस्य नारिकेलस्य उपयोगः क्रियते? सा क्रीडा कुत्र क्रीड्यते?
५. चन्द्रगुप्तमौर्यः कति वर्षाणि राज्यपालनं कृतवान्? ततोऽपि एकं वर्षं यावत् अधिकं राज्यपालनं कृतवतः तत्पुत्रस्य नाम किम्?
६. रशियाभाषायाः निमित्तं का लिपिः उपयुज्यते?
७. ऐदम्प्राथम्येन काचित् राजवंशीया केन्द्रमन्त्रिमण्डले स्थानं प्राप्तवती आसीत्। सा का?
८. चन्दीगडप्रदेशे 'राक् गार्डन्' कः निर्मितवान्?
९. सम्प्रदायविरोधं कृतवती इति कारणतः औरङ्गजेबः स्वपुत्रीं २० वर्षाणि यावत् कारागारे स्थापितवान् आसीत्। सा का?
१०. सः सिक्खगुरुः कः, यश्च गीतगोविन्दस्य कानिचन गीतानि ग्रन्थसाहिबनामके ग्रन्थे योजितवान् आसीत्?
११. गृहस्य पुरतः तुलसीसस्यानि किमर्थम् आरोप्यन्ते?
१२. लोकसभानिमित्तं कलकत्तानगरतः निर्वाचितः प्रसिद्धः राजनीतिज्ञः कः?
१३. कार्ल लूयीसूबर्येण स्थापितं विक्रमं (१०० मी.) कः अतिक्रान्तवान्?
१४. ध्वनिम् उत्पादयितुम् अशक्नुवन् अपि सारसपक्षी कथं सहचरान् स्वसमीपम् आकर्षति?
१५. १८०४ तमे वर्षे नेपोलियन् फ्रान्सुदेशस्य सम्राट् जातः। तस्मिन् एव वर्षे परिवहणक्षेत्रे काचित् अपूर्वा घटना घटिता। सा का?

## उत्तराणि

१. 'बिहू'। असमराज्यम्।
२. सेण्ट् जोसेफ्, यः येसुक्रिस्तस्य पोषकः आसीत्।
३. अलक्षेन्द्रः इति, तदीयः अश्वः बुसेफालस् इति च। अत्रैव सः अश्वः मृतः आसीत्। तस्य स्मरणार्थम् एतत् नगरं निर्मितम् अभवत्।
४. युबी-लक्पी। मणिपुरराज्ये।
५. २४ वर्षाणि। बिन्दुसारः, यश्च अशोकचक्रवर्तिनः पिता आसीत्।
६. कर्सारिल्लिक्लिपिः।
७. राजकुमारी अमृत कौर्, या च नेहरूमन्त्रिमण्डले स्वास्थ्यसचिवा आसीत्।
८. नेकचन्दवर्यः।
९. जेबुन्नीसा।
१०. गुरुः अर्जुनसिंहः।
११. सुरक्षां समृद्धिं च सूचयति इत्यतः।
१२. मेघनाथ शाहा।
१३. लिराय बुरेल्।
१४. उत्साहपूर्णनृत्यद्वारा।
१५. ऐदम्प्राथम्येन बाष्पचालितं रेलूयन्त्रम् आर्. ट्रेवीथिकवर्यः चालितवान्।

# र स वा र्ताः

## करतले गणकयन्त्रम्



करतले स्थापयितुं योग्यानि गणकयन्त्राणि एषु दिनेषु निर्मितानि। एतेषां नाम 'पिको कम्प्यूटर्' इति। 'पिको' पदस्य अर्थः– 'दशपरार्धतमः भागः' इति, यस्य च आकारः ऊहितुम् अपि न शक्यः। इदानीं लघुतमं कम्प्यूटर् नाम 'मैक्रोकम्प्यूटर्' इति। तदपेक्षया लघुतमं भवति पूर्वोक्तं कम्प्यूटर्। तादृशः समयः अपि अचिरात् एव आगच्छेत् यत्र हस्तघटीषु अपि कम्प्यूटरयन्त्रं योजितं भवेत्।

## वेगगामी रैल्यानम्



जपानदेशे वायव्यभागे 'शिन्कान्सेन् एक्स्प्रेस्' नामकेन रैल्यानेन ३४५ कि.मी. वेगेन सञ्चरता नूतनः विक्रमः स्थापितः अस्ति। एतत् यानं उगवा-जोमोकोगेन् स्थानकयोः मध्ये सञ्चरति। गतवर्षे एतेन एव यानेन प्रतिघण्टं ३३६ कि.मी. वेगेन सञ्चारः कृतः आसीत्। एतावता अपि अपूर्वः विक्रमः तु 'फ्रेन्च् टि जि वी सूपर् एक्स्प्रेस्' यानेन १९९० तमे वर्षे स्थापितः, यच्च प्रतिघण्टं ५१५ कि.मी. वेगेन सञ्चारं कृतवत् आसीत्।

## अतिपुरातनशिलाः



१५० वर्षेभ्यः पूर्वं स्काट्ल्याण्ड्देशे काश्चन शिलाः भूमिगर्भतः प्राप्ताः, यासां च परीक्षां कृत्वा आक्स्फर्ड् विश्वविद्यालयस्य विज्ञानिनः ऊहां कृतवन्तः यत् एताः ३७० दशलक्ष (मिलियन्) वर्षेभ्यः पूर्वं भूमौ सञ्चारं कृतवतां प्राणिनाम् अस्थिभिः सम्बद्धाः स्युः इति। महासर्पाणां मकराणां वा अस्थीनि एव एवं शिलारूपं प्राप्तवन्ति स्युः इति वदन्ति ते। अद्यावधि ग्रीन्ल्याण्ड्देशे प्राप्ताः शिलाः एव अतिप्राचीनाः इति भाव्यते स्म। किन्तु इदानीं स्काट्ल्याण्ड्देशे प्राप्ताः शिलाः न ततोऽपि प्राचीनाः।



# सहनशीलता

दयासागरनामके ग्रामे सदानन्दः नाम धनिकः निवसति स्म। सः क्षेत्रव्यवहारस्य निर्वहणार्थं गणनालेखनार्थं च कञ्चित् समर्थं जनम् उद्योगित्वेन नियोजयितुम् इच्छति स्म। एषा वार्ता पार्श्वग्रामवासिना भूस्वामिमित्रेण विद्यानन्देन श्रुता। सः योग्यतापरिचायकं पत्रं लिखित्वा दत्त्वा स्वस्य भागिनेयं नारायणं सदानन्दस्य समीपं प्रेषितवान्।

यदा नारायणः सदानन्दगृहम् आगतः तदा सेवकद्वारा प्रकोष्ठे उपविष्टः सदानन्दः एतां वार्तां ज्ञातवान्। सः सेवकम् उक्तवान्– "भवान् तं वदतु यत् भूस्वामी गृहे नास्ति, द्वित्रघण्टानाम् अनन्तरम् एव तस्य प्रत्यागमनं स्यात् इति" इति।

सेवकः बहिः गत्वा तथैव उक्तवान्। ततः अर्धघण्टा अतीता। नारायणः सेवकं पृष्टवान्– "भूस्वामी आगतः वा?" इति। "न" इति उक्तवान् सेवकः। पञ्चदशनिमेषाणाम् अनन्तरं पुनः तथैव पृष्टवान् नारायणः। तदा अपि 'न' इति उक्तवान् सेवकः। एवं बहुवारं प्रवृत्तम्।

अन्ते नारायणः निश्चितवान् यत् अद्य सदानन्दवर्यस्य मेलनं न भविष्यति इति। अतः सः सेवकम् आहूय– "भूस्वामी यदा प्रत्यागमिष्यति तदा सः वक्तव्यः यत् अहं दीर्घकालं यावत् प्रतीक्ष्य प्रतिगतः इति। मम आगमनस्य कारणं भवान् जानीयात् एव" इति उक्त्वा ततः निर्गतवान्।

दयासागरग्रामात् नारायणेन स्वग्रामः प्राप्तव्यः चेत् नदी काचित् अतिक्रमणीया आसीत्। अतः नारायणः नदीतीरं गतवान्। नदीतीरे केचन वार्तालापं कुर्वन्तः उपविष्टवन्तः आसन्। तान् पृष्टवान् नारायणः– "इतः गमनार्थं नौका कदा प्राप्येत?" इति।



तदा तेषु कश्चित् उक्तवान्– "नौका कदा आगच्छेत् इति वयम् अपि न जानीमः। वयम् एकघण्टातः पूर्वम् अत्र आगताः। किन्तु नौका न दृश्यते" इति।

पुनः एका घण्टा अतीता। तथापि नाविकः तत्र न आगतः। तदा नारायणः असहनया उक्तवान्– "नाविकः कदा आगच्छेत् इति न ज्ञायते। अस्मासु एव कश्चित् गत्वा तम् अन्विष्य आनयति चेत् वरं स्यात्" इति।

तदा तेषु कश्चित् उक्तवान्– "किं त्वराप्रदर्शनेन? नाविकः सदा समये उपस्थितः भवति स्म। सः श्रमशीलः प्रामाणिकः। अद्य विलम्बः जायमानः अस्ति यत् तस्य विशिष्टं कारणं स्यात्। अचिरात् एव आगच्छेत् सः" इति।

पुनः अल्पः कालः अतीतः। इतः परम् अपि मौनं प्रतीक्षां कर्तुम् अशक्नुवन् नारायणः– "एवं विलम्बः जायमानः अस्ति चेदपि मौनं स्थितवन्तः भवन्तः। अहम् इदानीं गत्वा तम् अन्विष्य आनेष्यामि" इति उक्त्वा समीपे स्थितं ग्रामं प्रति प्रस्थितवान्।

ग्रामं गत्वा ग्रामीणान् पृष्ट्वा नाविकस्य गृहं गतवान् नारायणः। तदा नाविकस्य पत्नी उक्तवती– "अद्य उदरवेदनया पीडितः सः वैद्यसमीपं गतवान् आसीत्। औषधम् आनीय इदानीं नौकाघट्टं प्रति गतवान्। एतावता सः तत्र गतवान् स्यात्" इति।

नारायणः त्वरया नौकाघट्टस्य समीपं गतवान्। तावता नौका ततः निर्गता आसीत्। नद्यां दूरे नौका दृश्यते स्म। नारायणः खेदेन इतस्ततः पश्यन् आसीत्। तावता कश्चन तत्र आगतः। "भवान् नौकानिर्गमनात् पूर्वम् अत्र आगन्तुं न शक्तः इति भाति। इतः गता नौका एकघण्टाभ्यन्तरे प्रत्यागच्छेत्। अहम् अपि भवता सह आगच्छामि। नाविकं वदामि यत् आवाम् अपरतीरं प्रापयतु इति। मम वचनम् अङ्गीकुर्वन् सः द्वयोः एव निमित्तम् अपि नौकां चालयिष्यति" इति उक्तवान् सः।

किञ्चित्कालानन्तरं वार्तालापतः ज्ञातं यत् एषः एव सदानन्दः इति, यं च प्रतीक्ष्य निराशया प्रत्यागतम् आसीत्।

एतत् ज्ञातवतः नारायणस्य मुखे प्रसन्नताभावः प्रसृतः। सः विद्यानन्देन दत्तं योग्यतापरिचायकपत्रं सदानन्दाय दातुम् उद्युक्तः। किन्तु सदानन्दः तत्र तस्य पत्रस्य स्वीकरणं निराकुर्वन् उक्तवान्– "भवतः मातुलेन पूर्वम् एव उक्तम् आसीत् यत् भागिनेयः मया प्रेषयिष्यते इति। किन्तु उद्योग- सम्बन्धी व्यवहारः एवं मार्गे न उचितः। तदर्थं पुनः कदाचित् मम गृहम् एव आगत्य एतत् पत्रं ददातु" इति।

नारायणः म्लानवदनः सन् मौनम् आश्रितवान्। ततः अल्पे एव काले नौका प्रत्यागता। नारायणः सदानन्दः च अपरं तीरं प्राप्तवन्तौ।

सदानन्दः नारायणेन सह विद्यानन्दस्य गृहम् एव आगतवान्। स्वगृहं प्रति नारायणस्य आगमनस्य अनन्तरं यद्यत् प्रवृत्तं तत्सर्वं विस्तरेण विद्यानन्दं निवेदितवान् सः। पुनः उक्तवान् च– "भवान् मत्समीपम् यम् उद्योगार्थिनं प्रेषयति सः विश्वासार्हः एव भवति इति जानामि अहम्। किन्तु अहं मम कार्याणि यस्य अधीनानि करोमि सः सहनशीलः स्यात् इति मम अपेक्षा। यतः बहुभिः सह यदा व्यवहारः क्रियते तदा परमसहना आवश्यकी भवति। अतः अहं नारायणस्य सहनाशक्तेः परीक्षां कृतवान्" इति।

एतत् श्रुत्वा लज्जितः नारायणः सदानन्दम् उक्तवान्– "मम न्यूनता भवता सम्यक् ज्ञापिता। सहनाशीलता जीवने अत्यावश्यकी इति अद्य मया सम्यक् अवगतम्। यदि भवादृशस्य मार्गदर्शनं स्यात् तर्हि अहं मम दोषान् दूरीकृत्य उत्तमत्वं प्राप्तुं प्रामाणिकप्रयत्नं कुर्याम्" इति।

तदा सदानन्दः नारायणस्य स्कन्धे प्रीत्या हस्तं स्थापयित्वा– "भवान् गुणवान् इति जानामि अहम्। श्वः आरभ्य मम उद्योगी भवान्। अस्तु, मम अत्र अन्यत् कार्यम् अस्ति। अहम् आगच्छामि तावत्" इति उक्त्वा ततः निर्गतवान्।



# हानिप्रस्तावः

कस्मिंश्चित् ग्रामे पूर्वं सुभाषः नाम कश्चन वणिक् आसीत्। तस्य आत्मीयं मित्रं नरसिंहः। नरसिंहः सर्वथा निर्धनः। तथापि तयोः मैत्री तु दृढा आसीत्।

नरसिंहस्य एकमात्रपुत्रः नारायणः। नारायणः विद्याभ्यासे सुनिपुणः। एतत् जानन्, तत्पितुः आर्थिकदुस्स्थितिं च जानन् सुभाषः नारायणस्य विद्याभ्यासस्य समग्रं व्ययं स्वयं निर्वहति स्म।

नारायणः यदा पदवीधरः जातः तदा नरसिंहः सुभाषम् उक्तवान्– "नारायणाय कञ्चित् उद्योगं ददातु" इति। सुभाषः नगरवाणिज्यसम्बन्धे गणनासमर्थं कञ्चित् इच्छति इति जानाति स्म नरसिंहः।

सुभाषः नारायणम् आहूय पृष्टवान्– "अन्तिमपरीक्षायां गणिते भवता कति अङ्काः प्राप्ताः?" इति।

"९९% अङ्काः प्राप्ताः" इति उक्तवान् नारायणः।

"तन्नाम भवान् शते एकं दोषं कृतवान्। तन्नाम 1% हानिः। सहस्रे 10 दोषाः, दशसहस्रे शतं दोषाः, .... एवं दोषपरम्परा वर्धते। मम वाणिज्ये लक्षशः रूप्यकाणां व्यवहारः प्रचलति। तदा सहस्रशः दोषाः भवेयुः। एतादृशीं हानिम् अहं न इच्छामि। भवान् गणिते समर्थः एव। अतः राजधानीं गत्वा कोषागारोद्योगार्थम् आयोज्यमानायां परीक्षायां भागं वहतु" इति उक्तवान् सुभाषः।

नारायणः तथैव कृतवान्। सः करसङ्ग्रहविभागे अधिकारिपदे नियुक्तः अभवत्। एतां वार्तां श्रुत्वा नरसिंहः सुभाषम् उक्तवान्– "नारायणः करसङ्ग्रहाधिकारिपदं यत् प्राप्तवान् तेन धनागारस्य हानिः स्यात् खलु? भवान् बुद्धिमत्तया नारायणम् अन्यत्र सम्प्रेष्य हानिं निवारितवान्। किन्तु राजा किं वा कुर्यात्?" इति।

तदा सुभाषः नरसिंहस्य स्कन्धे हस्तं स्थापयित्वा– "अये मित्र! कार्यालयस्य उद्योगः उत्तमः, उत धनागारोद्योगः? नारायणेन एतादृशः एव उद्योगः प्राप्तव्यः इति मम आशयः आसीत्। अतः मिथ्याहानिप्रस्तावं कृत्वा अहं तं राजधानीं प्रेषितवान्। नारायणः बुद्धिमान्। सः कर्तव्ये कदापि लोपं न कुर्यात्। परीक्षायाम् अङ्कप्राप्तिः अन्या, कार्ये दक्षता अन्या। अतः काऽपि चिन्ता मास्तु भवतः" इति उक्तवान्।





# अप्रयोजिका दिव्यशक्तिः

पूर्वं सीतारामः नाम कश्चित् आसीत्। मातापितृविहीनस्य तस्य स्वकीया भूमिः अपि न आसीत्। सीतारामः अतीव बलवान् आसीत्। अतः सः कष्टदायकम् अपि कार्यम् अत्यन्तं सुलभतया करोति स्म। किन्तु सीतारामस्य अतीव सङ्कोचस्वभावः। तस्य सङ्कोचस्वभावं ज्ञात्वा जनाः सीतारामद्वारा सम्यक् कार्यं कारयन्ति स्म।

सीतारामः द्रष्टुं मन्मथसदृशः आसीत्। एकदा तस्य ग्रामस्य रामचन्द्रस्य पुत्री रमा सीतारामं दृष्टवती। तयोः परिचयानन्तरं क्रमशः तौ परस्परम् अनुरक्तौ।

एकस्मिन् दिने रमा सीतारामं स्वकीयम् अनुरागं निवेद्य 'मां परिणयतु' इति साग्रहं प्रार्थितवती।

तस्मिन् समये किमपि वक्तुम् अनिच्छन् सीतारामः मौनम् आश्रितवान्।

सीतारामः स्वविवाहविषये परिचितानाम् अभिप्रायं पृष्टवान्। तदा ते सर्वे अपि– "पश्यतु सीताराम, रमा अतीव चेष्टालुबालिका। मातापितरौ एव सा बहुधा पीडयति। भवान् तु सङ्कोचशीलः। यदि भवान् तां परिणेष्यति, तर्हि भवतः जीवनं सुखमयं न भविष्यति" इति उक्त्वा सीतारामे भयं जनितवन्तः। तेषां वचनं श्रुत्वा सीतारामः विवाहचिन्तनम् एव त्यक्तवान्।

अनन्तरम् एकस्मिन् दिने रमायाः पिता सीतारामस्य समीपम् आगत्य उक्तवान्– "मम पुत्री रमा भवन्तं विना अन्यं कमपि न परिणेष्यामि इति वदति। भवान् तु भीरुः इव व्यवहरति। रमायाः बहवः आशाः सन्ति। तस्याः आशाः पूरयितुम् भवान् न शक्नोति। अहं तस्यै अन्यत्र वरान्वेषणं करोमि। किन्तु भवान् यदि अस्मिन् ग्रामे एव निवसति, तर्हि



भवतः तस्याः च पुनः पुनः मेलनं भवति एव। मार्गे गमनसमये मेलनम् अनिवार्यम् एव भवति। एवं पुनः पुनः भवतोः परस्परदर्शनेन रमा सर्वदा भवन्तं स्मरन्ती एव तिष्ठति। रात्रौ अपि भवतः स्मरणेन सा निद्रां कर्तुं न शक्नोति। अतः सा अन्यं परिणेतुं न इच्छति। अतः यदि भवान् इतः अन्यत्र गच्छति, तर्हि तस्याः विवाहः सुलभतया सम्पद्येत" इति।

"अस्तु" इति अङ्गीकृत्य सीतारामः तद्दिने तं ग्रामं त्यक्त्वा अरण्यमार्गम् आश्रितवान्। तत्र एकः संन्यासी लब्धः। सीतारामः संन्यासिनः पादयोः नमस्कारं कृत्वा स्वकीयं कष्टं निवेदितवान्।

संन्यासी सीतारामं सान्त्वयित्वा उक्तवान्– "मया सह एव तिष्ठतु भवान्। समस्यायाः परिहारः भविष्यति" इति।

सीतारामः संन्यासिनः समीपे स्थित्वा सप्ताहद्वयं सम्यक् सेवां कृतवान्। संन्यासी सीतारामद्वारा जलस्य आनयनम्, पाककार्यम् इत्यादिकं कारितवान्।

सप्ताहद्वयानन्तरं सः संन्यासी सीतारामम् उक्तवान्– "अहं काशीं गमिष्यामि। भवान् अन्यत्र गन्तुम् अर्हति" इति।

तदा अनन्योपायः सीतारामः ततः गन्तुम् उद्युक्तः। तदा संन्यासी अनुकम्पेन– "भवतः अतीव सङ्कोचस्वभावः सौजन्यं च। एवं चेत् जनाः एव भवन्तं वञ्चयन्ति। अतः अहं काश्चन दिव्यशक्तीः भवते दास्यामि। ताः शक्तयः अन्येषाम् उपयोगाय एव प्रयोक्तव्याः। तदा एव प्रयोजनं सिध्यति। भवतः उपयोगाय दिव्यशक्तीनाम् उपयोगः न करणीयः। यं भवान् स्वामिनं मन्यते तेन उक्तानि कार्याणि कर्तुं समर्थः भवति भवान्" इति वदन् सीतारामस्य शिरसि हस्तं संस्थाप्य किमपि मन्त्रोच्चारणं कृत्वा ततः गतवान्।

अनन्तरं सीतारामः प्रयाणं कुर्वन् अग्रे गतवान्। मार्गे धनिकस्य एकं गृहं लब्धम्। सीतारामः तत्र गत्वा गृहस्य स्वामिनं सविनयं पृष्टवान्– "किमपि कार्यम् अस्ति वा?" इति।

तदा अन्यमनस्कः धनिकः असहनया पृष्टवान्– "कीदृशं कार्यं कर्तुं शक्नोति

भवान्? मम गृहस्य पृष्टतः कश्चन तटाकः अस्ति। तत्र विद्यमानं जलं समग्रं पिबति वा?'' इति।

धनिकेन उक्तं कार्यम् अङ्गीकृत्य सीतारामः साक्षात् धनिकस्य तटाकं गतवान्। सर्वं जलं पीतवान् च। एतत् दृष्ट्वा चकितः धनिकः उक्तवान्– ''एतादृशीं महतीं शक्तिं सम्पादितवान् भवान् शापग्रस्तः एव स्यात्। शापग्रस्तेन सह वासः, तादृशस्य साहाय्यस्य स्वीकरणं वा क्लेशाय भवेत्। अतः इतः कृपया निर्गच्छतु भवान्'' इति।

आत्मनः दौर्भाग्यं स्मरन् ततः निर्गतः सीतारामः अन्यं ग्रामं गत्वा तत्रत्यं धनिकम् उद्योगं प्रार्थितवान्। तस्य धनिकस्य नाम धनदेवः इति। महाकृपणः सः सीतारामाय उद्योगं दत्तवान्। अल्पे एव काले सः ज्ञातवान् यत् कठिनतमम् अपि कार्यं सीतारामः लीलया करोति इति। अतः यः सीतारामद्वारा बहूनि कार्याणि कारितवान्। ग्रामीणानां निमित्तं काष्ठच्छेदं कारितवान् सः। ग्रामीणानां वस्त्राणां क्षालनम् अपि कारितवान्। धनदेवः ग्रामीणेभ्यः धनं प्राप्नोति स्म। किन्तु सीतारामाय वेतनं किं, पूर्णोदरं भोजनम् अपि न ददाति स्म।

एतेन खिन्नः सीतारामः धनदेवम् उक्तवान्– ''अधिकः आहारः विश्रान्तिः च आवश्यकी'' इति।

तदा धनदेवः– ''भवान् कश्चन शापग्रस्तः। शापग्रस्तः यथा द्रष्टव्यः तथा भवान् दृष्टः मया। एतेन एव भवतः हितम्''



इति।

धनदेवस्य एतादृशं वचनं श्रुत्वा 'इतः परं अत्र स्थित्या किमपि प्रयोजनं नास्ति' इति विचिन्त्य सीतारामः ततः स्वग्रामं गतवान्। तत्र स्वानुभवान् रमायाः पितरं रामचन्द्रम् उक्तवान्।

तदा रामचन्द्रः महता सन्तोषेण उक्तवान्– "एतादृशीः दिव्यशक्तीः सम्पाद्य भवान् किमर्थम् अन्येषां सेवां करोति? मम पुत्रीं परिणीय तां स्वामिनीं भावयन् तस्याः आशाः पूरयतु। एतेन भवतः अपि सुखम् एव" इति।

अनन्तरं रमा-सीतारामयोः विवाहः सम्पन्नः।

विवाहानन्तरं सीतारामः पत्नीम् उक्तवान्– "भवती एव गृहस्वामिनी। कष्टदायकम् अपि कार्यम् अहं लीलया करोमि। विना सङ्कोचम् आज्ञापयतु माम्। यतः अहं भवत्याः सेवकः" इति।

तदा रमा लज्जया शिरः अवनमय्य– "किं वदति भवान्? पतिः यथा आदिशति तथा व्यवहारः पत्न्याः धर्मः। एवं स्थिते अहं कथं वा आदेष्टुं शक्नुयाम्? भवान् कस्यापि सेवकः न। भवान् एव मम स्वामी। भवान् प्रीत्या मह्यं यत् ददाति तदेव प्रियं मम। भवान् स्वातन्त्र्येण जीवति चेत् तदेव प्रियं मम। मम बुद्धिमत्तायाः साहाय्यं तु सदा अस्ति एव" इति उक्तवती।

यदा रमया 'भवान् मम स्वामी' इति उक्तं तदा सीतारामस्य मनसि आनन्दतरङ्गाः। पत्न्याः बोधनतः सः ज्ञातवान् यत् दिव्यशक्तीः प्राप्य सेवकजीवनस्य यापनस्य अपेक्षया अपि परिश्रमपूर्वकम् आत्मगौरवजीवनम् एव वरम् इति। अतः सः तस्मात् दिनतः परिश्रमेण जीवितुम् उद्युक्तः। दैवानुग्रहतः तेन प्रभूतं धनम् अपि सम्पादितम्। सः धनिकः अभवत्। सीतारामे जातं परिवर्तनं दृष्ट्वा रमा नितरां सन्तुष्टा। रमायाः सन्तोषं दृष्टवतः सीतारामस्य अपि तृप्तिः। एवं तयोः जीवनं सुखमयं जातम्।





# वीरः हनूमान्

रणरङ्गम् आगतः प्रहस्तः वानरवीरैः सम्मुखीकृतः। वानरवीराः राक्षसाः च परस्परं ताडयन्तः मारितवन्तः। प्रहस्तस्य चत्वारः मन्त्रिणः वीरावेशेन युद्धं कुर्वन्तः वानरान् कदलीसस्यानि इव मारयन्तः अग्रे गतवन्तः। एतत् दृष्ट्वा वानरप्रमुखाः प्रहस्तमन्त्रिणः सम्मुखीकृतवन्तः। द्विविदः नाम वानरवीरः बृहतीं शिलाम् उन्नीय क्षिप्त्वा नरान्तकस्य वधं कृतवान्। दुर्मुखः नाम वानरवीरः समुन्नतनामकं राक्षसं, जाम्बवान् च महानादनामकं राक्षसं, तारः कुम्भहनुनामकं राक्षसं च संहृतवन्तः। एवं प्रहस्तस्य चत्वारः अपि मन्त्रिणः मृताः अभवन्।

मन्त्रिणां संहारं प्रत्यक्षं दृष्ट्वा प्रहस्तः क्रोधेन अग्निः इव ज्वलन् वानरसेनायाः संहारम् आरब्धवान्। तदा नीलः प्रहस्तं सम्मुखीकृतवान्। प्रहस्तः बाणवर्षणं करोति चेत् नीलः शिलावर्षणं करोति स्म। प्रहस्तस्य बाणाः नीलस्य शरीरे व्रणान् कुर्वन्ति स्म, तथापि नीलः युद्धं कुर्वन् एव अस्ति। सः प्रहस्तस्य रथस्य अश्वान् मारितवान्। प्रहस्तस्य धनुः भञ्जितवान् अपि। अनन्तरं प्रहस्तनीलयोः बाहुयुद्धम् आरब्धम्। एतस्मिन् युद्धे नीलः प्रहस्तस्य शिरः भञ्जितवान्। प्रहस्तः गतप्राणः जातः। एतत् दृष्ट्वा राक्षसाः रोदनं कुर्वन्तः लङ्कां प्रतिगतवन्तः।

एवं प्रत्यागताः यदा रावणं प्रहस्तवधं निवेदितवन्तः तदा सः नितरां क्रुद्धः अभवत्।

२५. कुम्भकर्णस्य उत्थापनम्



तेन निश्चितं यत् मया एव इदानीं युद्धार्थं गम्यते इति। अनन्तरं सः रथम् आरुह्य रणरङ्गं प्रति प्रस्थितवान्।

यदा सः नगरात् बहिः आगतवान् तदा शिलावृक्षादीन् गृहीत्वा युद्धार्थं सन्नद्धान् वानरान् दृष्टवान्। रणरङ्गाभिमुखम् आगच्छन्तं रावणं दूरात् दृष्ट्वा रामः विभीषणं पृष्टवान्– "रावणेन सह विशाला सेना अस्ति एव। तन्मध्ये उन्नतध्वजयुक्तेषु रथेषु उपविश्य आगच्छन्तः बहवः दृश्यन्ते। ते के के?" इति।

तदा विभीषणः राक्षसवीराणां परिचयं निवेदितवान्। रावणेन सह तदीयः पुत्रः अकम्पनः, इन्द्रजित् च आस्ताम्। अतिकायः महोदरश्चापि आस्ताम्। पिशाचः, त्रिशुरः, कुम्भः, निकुम्भः इत्यादयः अन्ये वीराः अपि आसन्।

रावणस्य तेजः दृष्ट्वा रामः आश्चर्यचकितः। यतः तादृशं तेजः सामान्येषु देवदानवेषु द्रष्टुं न शक्यः आसीत्। अभिमुखम् आगच्छन्तं रावणं दृष्ट्वा रामः सन्तुष्टः अभवत्। 'एतेन अविवेकिना दुष्टेन सीतापहरणं यत् कृतं तदर्थं प्रतीकार-साधनार्थम् एषः योग्यः समयः' इति आलोचितवान् सः। रामेण सह लक्ष्मणः अपि युद्धार्थं सन्नद्धः अभवत्।

वानरसेनायां भीतिं जनयतः अग्रे आगच्छतः रावणस्य अभिमुखं सुग्रीवः आगतः। रावणः सुग्रीवं तृणाय मन्यमानः एकेन एव बाणप्रहारेण मूर्च्छितं कृतवान्। एतत् दृष्ट्वा राक्षसाः सन्तोषेण ध्वनिं कृतवन्तः।

एतत् दृष्ट्वा गवाक्षः, गवयः, ऋषभः, ज्योतिर्मुखः, नभः इत्यादयः वानरवीराः स्वशीरं वर्धयित्वा बृहतीः शिलाः उन्नीय रावणेन सह युद्धं कर्तुम् उद्युक्ताः अभवन्। रावणः तान् सर्वान् लीलया निवारितवान्। तदा रावणस्य पराक्रमातिशयात् भीताः वानराः रामसमीपं गतवन्तः।

वायुना नीयमानानि शुष्कपर्णानि इव स्थितां वानरसेनां रक्षितुं रामः अग्रे आगतवान्। एतत् दृष्ट्वा लक्ष्मणः

निवेदितवान्– ''अग्रज! रावणस्य संहारार्थं मह्यम् अवकाशं ददातु'' इति।

तदा रामः– ''अस्तु तावत्। किन्तु युद्धे विशेषजागरूकता भवतु'' इति उक्त्वा आशिषा अनुगृह्य लक्ष्मणं प्रेषितवान्।

लक्ष्मणः रावणस्य अभिमुखम् आगतः। एतत् दृष्ट्वा हनूमान् झटिति अग्रे आगत्य वामहस्तम् उन्नीय रावणस्य पुरतः स्थित्वा– ''अये रावण! भवान् देव-दानव-यक्ष-राक्षसादीन् जितवान् स्यात् नाम। किन्तु वानराः एव भवतः हननं करिष्यन्ति। अहं स्वयं मम हस्तेन भवन्तं संहरिष्यामि'' इति उक्तवान्।



एतत् श्रुत्वा रावणः उपहासपूर्वकम् उक्तवान्– ''अये वानर! अहो धैर्यं भवतः! 'केनचित् वानरेण रावणः मारितः' इति कीर्तिः प्राप्तव्या वा भवता? किन्तु एतत् असाध्यम्। यतः मम एकः बाणप्रहारः एव भवन्तं यमसदनं प्रेषयिष्यति'' इति।

''रावण! भवतः पुत्रः अक्षः मया संहृतः। इदानीं भवतः संहारः अपि क्रियते'' इति उक्तवान् हनूमान्।

तदा रावणः स्वहस्तेन हनूमन्तं वक्षःस्थले प्रहृतवान्। तदा क्रुद्धः हनूमान् अपि रावणम् उरसि मुष्ट्या प्रहृतवान्। तेन प्रहारेण रावणः तथा कम्पमानः जातः, यथा भूकम्पसमये पर्वतः कम्पमानः भवति। एतत् दृष्ट्वा वानराः हर्षनादं कृतवन्तः।

रावणः हनूमतः पराक्रमस्य प्रशंसा कृतवान्। तदा हनूमान् क्रोधेन– ''धिक् मम पराक्रमम्! मम मुष्टिप्रहारं प्राप्य अपि भवान् सजीवं तिष्ठति इति तु मम दौर्भाग्यम्। पुनः भवान् मां प्रहरतु। अहं प्रतिप्रहारेण भवन्तं यमसदनं प्रेषयिष्यामि'' इति उक्तवान्।

क्रुद्धः रावणः मुष्ट्या बलात् हनूमन्तम् उरसि प्रहृतवान्। एतेन प्रहारेण हनूमान् विचलितः अभवत्। सः पुनः यावत् स्वस्थः जातः तावता रावणः नीलेन सह युद्धार्थं गतः आसीत्।

नीलः वानरसेनायाः नायकः। रावणस्य बाणाः यदा तम् अपीडयन् तदा सः रावणम् उद्दिश्य एकां बृहतीं शिलां क्षिप्तवान्।



इदानीं भवन्तं यमपुरीं प्रेषयिष्यामि" इति उक्तवान् रावणः।

"अये पापात्मन्! अलम् आत्मस्तुत्या। अहं भवतः शौर्यं पराक्रमं च सम्यक् जानामि। युद्धार्थं सन्नद्धः अस्मि अहम्" इति उक्तवान् लक्ष्मणः।

तदा क्रुद्धः रावणः लक्ष्मणस्य उपरि बाणवर्षणं कृतवान्। लक्ष्मणः तु स्वबाणैः तान् बाणान् छिन्नवान्। एवं तयोः बाणयुद्धं दीर्घकालं प्रवृत्तम्। युद्धे लक्ष्मणः मूर्च्छां गतवान्।

रावणः झटिति अग्रे आगत्य लक्ष्मणं हस्ताभ्याम् उन्नीय नेतुम् उद्युक्तः। किन्तु तावता तत्र आगतः हनूमान् मुष्ट्या रावणं कठोरं प्रहृतवान्। एतेन प्रहारेण रावणः उन्मुखः भूमौ पतितवान्। तस्य नेत्राभ्यां कर्णाभ्यां मुखात् च रक्तं निर्गतम्।

एतत् दृष्ट्वा हनूमान् मूर्च्छावस्थां गतं लक्ष्मणम् उन्नीय रामसमीपं गतवान्।

पुनः अल्पे एव काले लक्ष्मणः सचेतनः जातः। रावणः अपि सचेतनः जातः। रावणः पुनरपि युद्धार्थं सन्नद्धः जातः।

तदा रामः रावणस्य अभिमुखम् आगतवान्। एतत् दृष्ट्वा हनूमान् रामम् उक्तवान्– "भवान् मम उपरि उपविश्य युद्धं करोतु" इति।

रामः तथैव कृतवान्। हनूमतः स्कन्धे उपविष्टः सः रथारूढेन रावणेन सह युद्धार्थम्

अत्रान्तरे स्वस्थः हनूमान् साक्षात् रावणस्य समीपम् आगतवान्।

सः रावणम् उक्तवान्– "अन्येन सह युद्धार्थं गत्वा आत्मानं रक्षितवान् भवान्" इति।

रावणः आत्मनः उपरि पतन्तीं महाशिलां बाणैः विच्छिद्य धूलिसात्कृतवान्। अनन्तरम् आग्नेयास्त्रेण नीलं मूर्च्छितं कृत्वा लक्ष्मणस्य अभिमुखं गतवान्।

"अये राक्षसराज! किं वानरवीरैः सह युद्धेन? मया सह युद्धं करोतु तावत्" इति रावणम् उक्तवान् लक्ष्मणः।

"हे लक्ष्मण! भवतः आयुः समाप्तम्। अतः भवान् मम पुरतः आगतः अस्ति। अहम्

अग्रे गतवान्।

रावणः रामस्य वाहनं हनूमन्तम् उद्दिश्य तीक्ष्णान् बाणान् प्रयुक्तवान्। एतेषां बाणानां प्रहारतः हनूमान् किञ्चिदपि विचलितः न जातः। किन्तु रावणस्य कृत्यं दृष्टवतः रामस्य कोपः तु नितरां प्रवृद्धः। सः रावणरथस्य चक्राणि, ध्वजम्, अश्वान्, छत्रं, सारथिं च एकैकशः पातितवान्। अन्ते तीक्ष्णेन बाणेन रावणम् उरसि प्रहृतवान् सः। तदा रावणस्य हस्तात् धनुः च्युतम् अभवत्। रावणः मूर्च्छावस्थां प्राप्तवान्।



पुनः सचेतनस्य रावणस्य मुकुटम् अर्धचन्द्राकारस्य बाणस्य प्रयोगेण पातयित्वा रामः उक्तवान्– ''अये रावण! अनेकैः वीरैः सह युद्धं कृत्वा श्रान्तः स्यात् भवान्। अतः इतः गन्तुम् अनुज्ञा दीयते मया। विश्रान्तिसुखम् अनुभूय नवोत्साहं प्राप्य पुनः युद्धभूमिम् आगच्छतु। अनन्तरम् आवयोः युद्धं प्रचलतु'' इति।

एतानि वचनानि श्रुत्वा, आत्मनः दुरवस्थां स्मरन् रावणः नितरां लज्जितः अभवत्। 'अतुलपराक्रमशाली इति कीर्तिः अस्ति मम। देवेन्द्रादयः अपि मम नामश्रवणात् एव भीताः भवन्ति। एतादृशः अहम् अद्य रणरङ्गे शत्रोः कृपायाः पात्रं जातः अस्मि। अहो, दौर्भाग्यं मम! धिक् माम्। धिक् मम पौरुषम्' इति व्यथाम् अनुभवन् लज्जया सः लङ्कां प्रतिगतवान्। रामलक्ष्मणौ युद्धे व्रणितानां वानराणां सेवार्थम् उद्युक्तौ जातौ।

लङ्कां प्रतिगतः रावणः यदा यदा रामबाणप्रहारं स्मरति तदा तदा लज्जां भीतिं च अनुभवति। भीतमनस्कः सः स्वानुचरान् उक्तवान्– ''इन्द्रम् अपि लीलया जितवन्तं मां कश्चन मानवः पराजितवान्। मया यत् महत् तपः आचरितं तत् व्यर्थं जातम्। ब्रह्मणा उक्तम् आसीत् यत् मानवात् भवतः अपायः भविष्यति इति। तत् सत्यम् एव जातम्। मानवात् अपि मम मरणं न भवेत् इति मया न प्रार्थितं यत् तत् इदानीं कष्टाय जातम्। हे राक्षसवीराः! इदानीं भवद्भिः सर्वैः महान् पराक्रमः प्रदर्शनीयः, शत्रवः संहरणीयाः च। नगरं जागरूकतया रक्षणीयम्



अपि। केचन इदानीम् एव गत्वा कुम्भकर्णं निद्रातः जागरयन्तु'' इति।

युद्धारम्भात् नवभ्यः दिनेभ्यः पूर्वं कुम्भकर्णः निद्रां गतः आसीत्। रावणस्य विश्वासः आसीत् यत् कुम्भकर्णः यदि उत्थाप्येत, यदि सः रणरङ्गं गच्छेत्, तर्हि रामलक्ष्मणयोः मरणं सम्भवेत् इति। 'यथा मम तथा कुम्भकर्णस्य शापपीडा काऽपि नास्ति इत्यतः सः निश्चयेन शत्रुं नाशयेत्' इति रावणस्य विचारः आसीत्।

रावणस्य आज्ञायाः अनुगुणं राक्षसाः चन्दन-पुष्पमालादीनि भोजनपदार्थान् च स्वीकृत्य कुम्भकर्णस्य प्रासादं गतवन्तः। स च प्रासादः सुविशालः आसीत्। राक्षसाः तं प्रासादं प्रवेष्टुम् एव कष्टम् अनुभूतवन्तः। यतः निःश्वासवायुः तान् दूरे पातयति स्म।

भूतले स्थितः पर्वतः इव कुम्भकर्णः प्रासादे गभीरनिद्रायां मग्नः अस्ति। तस्य जागरणं न सुकरम्। तथापि अन्या गतिः नास्ति इत्यतः राक्षसाः तं जागरयितुम् उद्युक्ताः सन्ति। महता कष्टेन ते प्रासादस्य अन्तः गतवन्तः। कुम्भकर्णस्य पुरतः मांसस्य राशिं स्थापितवन्तः। तस्य पार्श्वे सुरायाः भाण्डानि स्थापितवन्तः। कुम्भकर्णस्य शरीरं चन्दनेन लेपितवन्तः। पुष्पमालाभिः समग्रं शरीरम् अलङ्कृतवन्तः। उच्चस्वरेण कुम्भकर्णम् आहूतवन्तः। विविधं कोलाहलं कृतवन्तः। विविधवाद्यानि वादितवन्तः। कुम्भकर्णस्य शरीरम् आरुह्य इतस्ततः सञ्चारं कृतवन्तः। विविधैः आयुधैः शरीरे पीडां जनितवन्तः। एवं बहुविधाः प्रयत्नाः कृताः चेदपि किमपि प्रयोजनं न सिद्धम्।

अनन्तरं राक्षसाः गदाभिः मुसलैः अन्यैः आयुधैः च कुम्भकर्णं सम्यक् प्रहृतवन्तः। तेनापि प्रयोजनं न सिद्धम्। अतः राक्षसाः अश्वान् उष्ट्रान् गर्दभान् च आनीय कुम्भकर्णस्य शरीरस्य उपरि इतस्ततः चालितवन्तः।

एतादृशैः बहुविधप्रयत्नैः कुम्भकर्णः निद्रातः जागरितः। उत्थानसमनन्तरम् एव तीव्रा बुभुक्षा तम् अपीडयत्। पुरतः सिद्धम् षड्रसोपेतम् आहारं दृष्ट्वा सः तस्य खादने

उद्युक्तः अभवत्। मध्ये मध्ये तेन सुरा अपि पीता।

यदा उदरं पूर्णं तदा सः राक्षसान् पश्यन् पृष्टवान्– "मां किमर्थम् उत्थापितवन्तः भवन्तः? रावणः तु कुशली खलु? काऽपि विपत् तु न आपतिता खलु?" इति।

'काऽपि विपत् आगता अस्ति' इति कुम्भकर्णः ज्ञातवान् एव। अतः सः प्रश्नार्थकदृष्ट्या राक्षसान् दृष्टवान्।

रावणस्य मन्त्री यूपाक्षः कुम्भकर्णम् उद्दिश्य उक्तवान्– "कुम्भकर्ण! इतः पूर्वं देवदानवदैत्यादिभ्यः अल्पा अपि आपत् न आगता आसीत्। इदानीं कश्चन मानवः वानरैः सह आगत्य लङ्कानगरीम् आक्रान्तवान् अस्ति। सीता आनीता इत्यतः क्रुद्धः रामः इदानीं लङ्कासमीपम् आगत्य भीतिं जनितवान् अस्ति। पूर्वं कश्चन वानरः आगत्य लङ्कायाम् अग्निं संयोज्य सेनासमेतम् अक्षकुमारं मारयित्वा प्रतिगतः आसीत्। इदानीम् आगतः रामः युद्धे रावणं पराजित्य करुणया रावणं प्रतिप्रेषितवान्। शत्रोः दयायाः पात्रं सन् रावणः लज्जया लङ्कां प्रत्यागतवान्। कश्चन सामान्यः मानवः एतत् कृतवान् इत्यतः सर्वे राक्षसाः अवनतशिरस्काः सन्ति" इति।

युद्धे रावणः पराजितः इति वार्तां श्रुतवतः कुम्भकर्णस्य महान् क्रोधः आगतः। सः यूपाक्षं दृष्ट्वा उक्तवान्– "अहम् इदानीम् इतः एव गत्वा वानरान् संहरिष्यामि। रामलक्ष्मणौ यमसदनं प्रेषयिष्यामि। अनन्तरम् एव रावणं द्रक्ष्यामि। वानराणां मांसं राक्षसेभ्यः खादनार्थं दत्त्वा रामलक्ष्मणयोः रक्तं स्वयं पीत्वा प्रत्यागमिष्यामि" इति।

क्रुद्धः कुम्भकर्णः विना चिन्तनं दर्पेण यत् उक्तवान् तत् श्रुत्वा महोदरः करौ योजयित्वा कुम्भकर्णं निवेदितवान्– "महोदय! भवान् प्रथमं रावणं पश्यतु। सः यत् वदति तत् प्रथमं शृणोतु। अनन्तरम् उचितानुचितं विचार्य शत्रुसंहारार्थम् उद्युक्तः भवतु। राजाज्ञा शिरोधार्या अस्माकम्" इति।





# मन्दमतिः सुरेशः

कस्मिंश्चित् ग्रामे पूर्वं काचित् विधवा आसीत्। तस्याः एकः पुत्रः आसीत्। तस्य नाम सुरेशः। सः जन्मना अपि मन्दमतिः आसीत्। दैनन्दिनव्यवहारार्थम् अपि तस्य कौशलं न आसीत्। आपणतः आढकीम् आनयतु इति माता तं वदति चेत् आपणं गतः एषः मात्रा उक्तम् एव आनयति इति न। आनेतव्यस्य वस्तुनः नाम परिमाणं च विस्मरति स्म सः। आपणिकेन कियत् धनं प्रत्यर्पणीयं, कियत् प्रत्यर्पितम् इति ज्ञातुं न शक्नोति। मध्ये मार्गं धनं कोषात् पतितं चेदपि एषः न जानाति स्म।

माता पुत्रस्य दौर्बल्यं जानती स्वयम् एव कुटुम्बस्य निर्वहणं करोति स्म। पुत्रेण कृतान् दोषान् क्षाम्यति स्म सा। समये समये आहारव्यवस्थां कुर्वती सा पुत्रं प्रीत्या पश्यति स्म।

सुरेशः स्वस्य मन्दमतित्वं जानाति स्म। अतः कदाचित् सः मातरम् उक्तवान्– "अम्ब! मम यदि बुद्धिमत्ता स्यात् तर्हि कार्येषु भवत्याः साहाय्यं कुर्याम्। इदानीं तु अहं सर्वथा निरुपयोगी अस्मि। युवकस्य अपि मम पोषणं भवत्या क्रियमाणम् अस्ति" इति।

"हस्ते सर्वाः अङ्गुल्यः समानाः यथा न भवन्ति तथैव सर्वेषां बुद्धिमत्ता समाना न भवति। देवः भवते बुद्धिमत्तां न दत्तवान् स्यात्, किन्तु शरीरबलं दत्तवान् अस्ति, सद्गुणान् दत्तवान् अस्ति। अतः यावद् अस्ति तावता तृप्तिः प्राप्तव्या। अविद्यमानस्य विषये खेदः न प्राप्तव्यः" इति बोधितवती माता।

सुरेशः मातुः वचनं न अङ्गीकरोति। सः खेदेन मातरम् उक्तवान्– "अम्ब! अन्यत्सर्वम् अस्ति चेदपि बुद्धिमत्ता नास्ति

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



चेत् जनाः उपहसन्ति। अतः मया कथमपि बुद्धिमत्ता सम्पादनीया'' इति।

पुत्रस्य खेदं द्रष्टुम् अशक्नुवती माता उक्तवती– ''एवं तर्हि अरण्यवासिनीं मन्त्रवादिनीं दृष्ट्वा ततः बुद्धिमत्तां प्राप्नोतु'' इति।

मातुः वचनम् अङ्गीकुर्वन् सुरेशः मन्त्रवादिन्याः समीपं गतवान्। यदा एषः गतः तदा मन्त्रवादिनी चुल्ल्याः पुरतः उपविश्य पाकं कुर्वती आसीत्।

''अम्ब! अहं कश्चन मन्दमतिः। जनाः मम बुद्धिहीनतां दृष्ट्वा सदा उपहसन्ति। अहं मातुः साहाय्यं कर्तुं न शक्नोमि। मम मात्रा उक्तं यत् भवती बुद्धिमत्तादानेन अनुग्रहीष्यति इति। कृपया मह्यं बुद्धिमत्तां ददातु'' इति निवेदितवान् सुरेशः।

मन्त्रवादिनी सुरेशम् आपादमस्तकं दृष्ट्वा उक्तवती– ''अस्तु तर्हि, बुद्धिमत्तां दास्यामि भवते। किन्तु ततः पूर्वं प्रियतमं वस्तु आनीय मह्यं दातव्यं भवता'' इति।

सुरेशः गृहं गत्वा मन्त्रवादिन्या उक्तं निवेद्य मातरं पृष्टवान्– ''अम्ब! मम प्रियतमं वस्तु किम्?'' इति।

''कुक्कुटमांसं भवतः प्रियतमं खलु? अतः एकं कुक्कुटं नीत्वा मन्त्रवादिन्यै समर्प्य बुद्धिमत्तां प्राप्नोतु'' इति उक्तवती सुरेशस्य माता।

अनन्तरदिने सुरेशः कुक्कुटेन सह गत्वा मन्त्रवादिनीम् उक्तवान्– ''अम्ब! प्रियतमं वस्तु आनीतवान् अस्मि'' इति।

''भवता यत् आनीतं तत् प्रियतमं वा न वा इति परीक्षणीयं खलु मया? अतः मम प्रश्नस्य उत्तरं वदतु। पादाभ्यां विना का सञ्चरति?'' इति पृष्टवती मन्त्रवादिनी।

बहुधा चिन्तनस्य अनन्तरम् अपि सुरेशः तस्य प्रश्नस्य उत्तरं न ज्ञातवान्। अतः सः मन्त्रवादिनीम् उक्तवान्– ''अम्ब! अहम् एतस्य उत्तरं न जानामि'' इति।

''तर्हि सिद्धं यत् भवता प्रियतमं वस्तु न आनीतम् इति। पुनरेकम् अवकाशं ददामि। इदानीं वा इष्टतमम् आनीय ददातु'' इति उक्त्वा मन्त्रवादिनी सुरेशं प्रेषितवती।

यदा सुरेशः गृहं प्रत्यागतः तदा तदीया माता शय्याम् आश्रितवती आसीत्। प्रतिवेशिनः तस्याः शुश्रूषायां निरताः आसन्। ते सुरेशम् उक्तवन्तः– "भवतः माता पक्षवातरोगेण पीडिता सती शय्याम् आश्रितवती। वैद्यस्य चिकित्सा विफला जाता" इति।

सुरेशस्य माता पुत्रं स्वसमीपम् आहूय उक्तवती– "वत्स! मम अन्तिमक्षणाः आसन्नाः। मन्त्रवादिनी बुद्धिमत्तां दत्तवती स्यात् खलु? तदाधारेण जीवतु भवान्। भवतः जीवनं सुखमयं भवतु" इति। पुनः अल्पे एव काले प्राणान् त्यक्तवती च।

मातुः मरणं ज्ञात्वा सुरेशः नितरां दुःखितः अभवत्। रात्रौ बहुधा रोदनं कृतवान् सः। 'अहम् अद्य अनाथः जातः। इतः परं मम कोऽपि आधारः नास्ति' इति चिन्तितवान् सः। एवं चिन्तनसमये तेन ज्ञातं यत् माता एव अतिप्रीतिपात्रम् इति।

अतः सः मातुः शवं गोण्यां पूरयित्वा मन्त्रवादिन्याः समीपं गतवान्। "एतत्सन्दर्भे प्रियतमम् एव आनीतं मया। कृपया मह्यं बुद्धिमत्तां ददातु" इति मन्त्रवादिनीं प्रार्थितवान् च।

"भवतः वचनं सत्यं वा न वा इति परीक्ष्य ज्ञातव्यं मया। तदर्थम् एकं प्रश्नं पृच्छामि– "सुवर्णस्य अपेक्षया अपि अधिकया कान्त्या युक्तं वस्तु किम्?" इति पृष्टवती



मन्त्रवादिनी।

बहुधा चिन्तनस्य अनन्तरम् अपि सुरेशः तस्य उत्तरं वक्तुं न शक्तवान्।

तदा मन्त्रवादिनी उक्तवती– "पुनरपि इतः गत्वा सम्यक् विचिन्त्य प्रियतमं वस्तु आनयतु" इति।

मातुः शवं स्वीकृत्य गृहं प्रति प्रस्थितवान् सुरेशः। मार्गे कुत्रचित् सः स्वस्य दुरवस्थां स्मरन् रुदन् उपविष्टवान्। किञ्चित्कालानन्तरं कश्चन स्वरः श्रुतः– "किमर्थं रोदिति भवान्?" इति।

एवं पृष्टवत्याः नाम राधा इति। अश्रूणि स्रावयन् तां स्वकीयं कष्टं विस्तरेण निवेदितवान् सुरेशः। मातुः मरणं,

मन्त्रवादिन्याः प्रश्नान् चापि निवेदितवान् सः। बुद्धिमत्ता प्राप्तव्या इति स्वकीयाम् इच्छाम् अपि निवेदितवान् सः।

सर्वं श्रुत्वा हसन्ती उक्तवती राधा– "पादाभ्यां विना सञ्चारं करोति नदी। सुवर्णापेक्षया अधिककान्तिमान् तु सूर्यः। एतावत् अपि ज्ञातुम् अशक्नुवतः भवतः पोषणम् अन्येन एव करणीयम्। तत् कार्यं कर्तुम् अहं सिद्धा। ये मन्दमतयः भवन्ति ते पत्नीं महता अनुरागेण पश्यन्ति इति श्रूयते। किं मां परिणेष्यति भवान्?" इति

"भवती एव इच्छति चेत् तत् ममापि अनुमतम् एव" इति सन्तोषेण उक्तवान् सुरेशः।

अनन्तरं राधा-सुरेशयोः विवाहः प्रवृत्तः। राधां सः महत्या प्रीत्या पश्यति स्म। तस्य अनुरागं दृष्ट्वा राधा अपि तृप्तिं प्राप्नोति स्म। कष्टसाध्यम् अपि कार्यं राधया सूचितं चेत् सन्तोषेण करोति स्म सुरेशः। तयोः दाम्पत्यजीवनं सुखमयम् आसीत्।

कदाचित् सुरेशस्य मनसि विचारः आगतः यत् पत्नीम् अतिरिच्य स्थितं प्रीतिपात्रं वस्तु अन्यत् नास्ति इति। अतः सः पत्न्या सह मन्त्रवादिन्याः समीपं गतवान्। "अम्ब! इदानीं तु निश्चयेन प्रीत्यतिशयपात्रम् आनीतवान् अस्मि" इति उक्तवान् सः।

मन्त्रवादिनी क्षणकालं तौ दृष्टवती। ततः पृष्टवती– "प्रारम्भे पादौ विना, ततः पादाभ्यां, ततश्च पादैः च सञ्चरन् जीवी कः?" इति।

सुरेशः पत्न्याः मुखं दृष्टवान्। राधा सुरेशस्य कर्णे उक्तवती– "मण्डूकः" इति। सुरेशः मन्त्रवादिनीम् उक्तवान्– "तादृशः जीवी मण्डूकः" इति।

"साधु वत्स! साधु! भवान् मन्दमतिः स्यात्। किन्तु बुद्धिमती पत्नी प्राप्ता अस्ति भवता। अतः भवतः जीवनं विना क्लेशं यापितं भविष्यति। भाग्यशाली भवान्" इति उक्त्वा तौ आशिषा अनुगृह्य प्रेषितवती मन्त्रवादिनी।





# नूतनः वैद्यः

रमाकान्तः नूतनतया वैद्यवृत्तिम् आरब्धवान् आसीत्। कदाचित् कश्चन कम्पनरोगपीडितः चिकित्सार्थं तस्य समीपम् आगतः। रमाकान्तः तस्मै औषधं तु दत्त्वा प्रेषितवान्, किन्तु स्वयं कम्पमानः जातः। एतत् दृष्ट्वा तदीया पत्नी सुनन्दा पृष्टवती– "किं जातं भवतः?" इति।

"इदानीं कश्चन कम्पनरोगपीडितः आगतः आसीत्। तस्य स्पर्शतः मयि स च रोगः सङ्क्रान्तः इति भाति" इति उक्तवान् रमाकान्तः।

एतावत् सः कष्टेन उक्तवान्। तावता एव तस्य कण्ठः अवरुद्धः अभवत्। एतस्मात् भीता सुनन्दा रमाकान्तस्य मातुलस्य श्रीनाथस्य समीपं गतवती।

श्रीनाथः तु प्रसिद्धः वैद्यः। ततः एव तदीयः भागिनेयः रमाकान्तः चिकित्साशास्त्रम् अधीतवान् आसीत्। सुनन्दायाः वचनं श्रुत्वा श्रीनाथः झटिति रमाकान्तस्य गृहम् आगतवान्। रमाकान्तं सम्यक् परीक्ष्य सुनन्दाम् उक्तवान् सः– "एषः स्वस्थः एव अस्ति। एतस्य कोऽपि रोगः नास्ति। अतः दिनद्वयं यावत् भोजने केवलस्य कारवेल्लस्य उपयोगः भवतु। कारवेल्लस्य क्वथितं, तस्यैव व्यञ्जनम्, तस्यैव उपसेचनं च करोतु। कारवेल्लपर्णानि घृते भृष्ट्वा परिवेषयतु" इति।

सुनन्दा श्रीनाथस्य कथनस्य अनुगुणं पाकं सज्जीकृत्य पतिं भोजनार्थम् आहूतवती। सुनन्दया यदा परिविष्टं तदा कारवेल्लमयान् पदार्थान् दृष्ट्वा क्रुद्धः रमाकान्तः– "अये, किम् एतत्? जीवने कदापि मया कारवेल्लनिर्मिताः पदार्थाः न खादिताः इति किं भवती न जानाति?" इति उच्चस्वरेण पृष्टवान्।

पत्युः उच्चस्वरेण निन्दनतः सुनन्दा



किञ्चिदपि न खिन्ना। "अहो, शस्त्रचिकित्सां विना एव सम्भाषणशक्तिः पुनः प्राप्ता भवता। भवतः मातुलेन उक्तम् आसीत्— एवम् एव भविष्यति इति" इति उक्तवती सा।

'यस्य विषये जुगुप्सा तादृशस्य वस्तुनः दर्शनतः मस्तिष्कं शस्त्रचिकित्सां विना एव सम्यक् भवति' इति आलोचितवान् रमाकान्तः।

क्षणकालस्य अनन्तरं सः पत्नीं सुनन्दाम् उक्तवान्— "भवती लक्ष्मीकान्तस्य गृहं गच्छतु। तस्य पत्न्या सह जल्पनं कृत्वा उपायेन जानातु यत् लक्ष्मीकान्तपितुः अप्रियं किम् इति। लक्ष्मीकान्तस्य पिता कम्पनज्वरपीडितः सन् चिकित्सार्थं मम समीपम् आगतः आसीत्। तादृशस्य रोगस्य चिकित्साम् अजानन्, मातुलं प्रष्टुं सङ्कोचम् अनुभवन् अहं स्वयं रोगपीडितः इव अभिनयं कृतवान्। तेन चिकित्साक्रमः ज्ञातः" इति।

सुनन्दा पत्युः बुद्धिमत्तां दृष्ट्वा सन्तुष्टा अभवत्। लक्ष्मीकान्तस्य गृहं गतवती च। गमनसमये श्रीनाथः मिलितः। सः सुनन्दां पृष्टवान्— "भवत्याः पतिः कथम् अस्ति?" इति। सुनन्दा वस्तुस्थितिं गोपयितुम् अशक्नुवती प्रवृत्तं समग्रं निवेदितवती।

एतत् श्रुत्वा श्रीनाथः हसन् उक्तवान्— "एवं किमपि स्यात् इति अहम् अपि चिन्तितवान् आसम्। वस्तुस्थितिं ज्ञातुम् अहं कारवेल्लचिकित्साम् उक्तवान्। किन्तु एतादृशस्य चिकित्सया लक्ष्मीकान्तस्य पिता स्वस्थः न भविष्यति। यतः वस्तुतः अपि सः कम्पनज्वरेण पीडितः अस्ति। एतदर्थम् अन्या एव चिकित्सा अस्ति" इति। अनन्तरं सुनन्दया सह रमाकान्तस्य गृहं गतवान्।

श्रीनाथः रमाकान्तं मृदुवचनैः तर्जयित्वा— "लक्ष्मीकान्तस्य पिता प्रथमं चिकित्सार्थं मम समीपम् आगतवान् आसीत्। अहं चिकित्सार्थम् अधिकं धनं पृष्टवान्। मम चिन्तनम् आसीत् यत् अधिकव्ययम् अनिच्छन् सः भवत्समीपम् आगमिष्यति, भवता यदि चिकित्सा क्रियते तर्हि भवतः कीर्तिः वर्धेत इति। भवतः

हितार्थम् अहम् एतावत् कुर्वन् अस्मि। किन्तु भवान् मां किमपि प्रष्टुं लज्जाम् अनुभवति। किम् एतत् उचितम्?'' इति उक्तवान्।

रमाकान्तः स्वकीयं दोषम् अङ्गीकृतवान्। अनन्तरं श्रीनाथः रमाकान्तं कम्पनज्वरचिकित्सायाः क्रमं बोधयित्वा स्वगृहं गतवान्। तदा रमाकान्तः पुनरपि कम्पमानः जातः।

''पुनः किमर्थं कम्पनम्? पुनरपि चिकित्साप्रसङ्गः कोऽपि आगतः वा?'' इति पृष्टवती सुनन्दा।

''मम कम्पनज्वरः इतोऽपि न गतः। कानिचन दिनानि मया शयनं करणीयम्। अहं लक्ष्मीकान्तपित्रे औषधं प्रेषयिष्यामि। किन्तु अन्यं कमपि रोगिणं द्रष्टुं न इच्छामि'' इति उक्तवान् रमाकान्तः।

एतत् श्रुत्वा सुनन्दा हसन्ती उक्तवती– ''प्रतिदिनं प्रातः सायं च हरतुलसीमूलनिर्मितं चूर्णं जले योजयित्वा दास्यामि। तदा भवान् यस्य कस्यापि साङ्क्रामिकरोगस्य चिकित्सां करोतु नाम, रोगप्राप्तेः भीतिः न भवति। व्यर्थभीत्या किमर्थं वृत्तौ अपख्यातिं सम्पादयति भवान्?'' इति।

तदा रमाकान्तः आश्चर्येण पृष्टवान्– ''अहं कम्पनज्वरात् भीतः इति कथं ज्ञातवती भवती?'' इति।

''यदा वैद्यवृत्तेः आरम्भः क्रियते तदा एतादृशी भीतिः सहजा, मया अपि वृत्तेः आरम्भे एतादृशी भीतिः प्राप्ता आसीत् इति भवतः मातुलेन उक्तम्। 'आवयोः समानः अनुभवः इत्यतः मम अनुभवस्य लाभः स्वीकृतः चेत् वरं खलु?' इत्यपि तेन उक्तम्'' इति उक्तवती सुनन्दा।

एतत् श्रुत्वा रमाकान्तः मौनम् आश्रितवान्। 'मातुलस्य पुरतः गर्वप्रदर्शनं, चिकित्साविषये प्रश्नकरणे सङ्कोचः च मूर्खतायै एव' इति चिन्तयन् रमाकान्तः स्वस्य व्यवहारस्य विषये लज्जाम् अनुभूतवान्। मातुलस्य साहाय्येन कालान्तरे 'समर्थः वैद्यः' इति कीर्तिं प्राप्तवान् च।





# कापालिका

काश्मीरदेशे पूर्वं कश्चन क्षत्रियः आसीत्। तस्य एका पुत्री आसीत्। तस्याः नाम 'सीमन्तिनी' इति। सीमन्तिन्याः बाल्यकाले एव तस्याः पिता दिवङ्गतः आसीत्। अतः पित्रार्जितायाः सम्पत्तेः उत्तराधिकारिणी सीमन्तिनी एव जाता। अतः तस्मिन् प्रदेशे उत्तमकुले जाताः अनेके युवकाः सीमन्तिनीं परिणेतुम् इच्छन्ति स्म। तेषु गणदेवः अपि अन्यतमः। सः सीमन्तिनीं बहु इच्छति स्म।

किन्तु सीमन्तिनी विवाहविषये न तथा आसक्ता। अतः सा विवाहविषये प्रष्टुम् आगतान् युवकान् सर्वान् अपि निराकृत्य प्रतिप्रेषयति स्म।

अरण्यविहारे, पशुपक्षिषु च सीमन्तिन्याः विशेषासक्तिः। एवं प्रकृतिदृश्येषु लीना सीमन्तिनी कापालिकीशक्तिः साधनीया इति चिन्तितवती। बेतालवशीकरणम्, परकायप्रवेशः, अदृश्यस्थितिः, कामरूपप्राप्तिः, कामगमनम् इत्यादयः साधनीयाः इति विचिन्त्य सीमन्तिनी विचित्राः विलक्षणाः च पूजाः, विचित्रम् आहारं, पानीयं च अभ्यस्तवती।

कदाचित् सा निश्चलदृष्ट्या चन्द्रं पश्यन्ती स्मृतिहीना सती निश्चेष्टिता भवति। पुनः कदाचित् विलक्षणाः मूलिकाः उपयुज्य कषायं कृत्वा पिबति। अन्यदा कदाचित् स्वशरीरं कठोरं दण्डयति। एवं प्रकारेण कठोरं तपः आचरन्ती सा काश्चन शक्तीः वशीकृतवती।

एतां वार्तां श्रुत्वा सीमन्तिन्याम् अनुरक्तः गणदेवः अतीव खिन्नः। 'पूर्वं सा सामान्या स्त्री यदा आसीत्, तदा एव मां निराकृतवती। इदानीं तु असाधारणस्त्री सा कथं मां वृणुयात्' इति चिन्तितवान् सः। तथापि कथमपि सा सामान्यस्त्रीत्वेन परिवर्तनीया

"काश्मीरीया जानपदकथा"

इति निश्चितवान् गणदेवः।

एवं निश्चित्य गणदेवः एकस्मिन् दिने मन्त्रवादिन्याः पिङ्गलायाः समीपं गतवान्। सा स्वगृहस्य पुरतः वने विविधाः मूलिकाः वर्धयति। तस्मात् औषधनिर्माणम् अपि करोति। सा मन्त्रतन्त्रविद्यायां नितरां समर्था। तस्याः समीपं गत्वा गणदेवः सीमन्तिन्याः विषये साहाय्यं प्रार्थितवान्।

गणदेवस्य मुखात् सर्वं श्रुत्वा पिङ्गला पृष्टवती– "यदि सीमन्तिनी कापालिनी भवितुम् इच्छति, तर्हि किमर्थम् अस्माभिः विघ्नः करणीयः?" इति।

"अहं सीमन्तिनीं परिणेतुम् इच्छामि। यदि सा कापालिनी भवति, तर्हि आवयोः विवाहः न शक्यते। भवती यावत् इच्छति, तावत् धनं दास्यामि। अतः कृपया तां सामान्यस्त्रीत्वेन परिवर्तयतु" इति उक्तवान् गणदेवः।

"किमर्थम् एवं चिन्तयति? कापालिकाजीवने सन्तोषः नास्ति इति चिन्तयति वा भवान्?" इति पृष्टवती पिङ्गला।

तदा गणदेवः उक्तवान्– "कापालिकाजीवने सन्तोषः सर्वथा नास्ति इति न वदामि अहम्। किन्तु तृप्तिः तु न भवेत् तादृशे जीवने। भवती एव अत्र प्रत्यक्षम् उदाहरणम्। एवं न वा?" इति।

"तत् तु सत्यम्। यदा शरीरे तारुण्यं



भवति तदा तु कापालिकाजीवनं नितरां रोचते। मम अधिकं सामर्थ्यम् अस्ति इति गर्वः अपि अनुभूयते। किन्तु वार्धक्ये पतिपुत्रादयः न सन्ति इति खेदः अनुभूयते एव। अतः वार्धक्यजीवने अतृप्तिः बाधते" इति उक्तवती पिङ्गला।

"तर्हि तां सामान्यस्त्रीत्वेन परिवर्तयतु" इति उक्तवान् गणदेवः।

तदा पिङ्गला उक्तवती– "अहं यथा वदामि तथैव करोतु। आगामिन्याम् अमावास्यायां भवान् शुनकैः सह मृगयार्थम् अरण्यं गच्छतु। कमपि प्राणिनं मा मारयतु। श्वेतहरिणस्य दर्शनपर्यन्तम् अरण्यं शोधयतु। श्वेतहरिणं यदा पश्यति तदा तं

सजीवं गृह्णातु। हरिणस्य किञ्चिदपि वेदना न करणीया। तस्य कण्ठे पाशं बद्ध्वा भवत: भवनं नीत्वा प्रकोष्ठे स्थापयतु" इति।

पिङ्गलया यथा सूचितं तथा कर्तुं सिद्धः अभवत् गणदेवः। अनन्तरं पिङ्गलायाः अनुज्ञां प्राप्य सः ततः प्रस्थितवान्। गमनसमये परिवृत्य दृष्ट्वा सः ज्ञातवान् यत् पिङ्गलायाः खञ्जता अस्ति इति।

पिङ्गलया यथा उक्तं तदनुसारं गणदेवः अमावास्यायां शुनकैः सह मृगयार्थम् अरण्यं गतवान्। तत्र तेन श्वेतः हरिणः दृष्टः। अनुक्षणं सः हरिणस्य ग्रहणार्थं शुनकान् प्रेषितवान्।

हरिणस्य समीपे यः शुनकः आसीत् सः न मदीयः इति संशयः उत्पन्नः गणदेवस्य। यतः तस्य शुनकस्य वामपादे कापि न्यूनता आसीत्। तथापि सः शुनकः महता वेगेन धावति स्म।

सः शुनकः शीघ्रमेव हरिणस्य पादं मुखेन गृहीतवान्। तावति काले गणदेवः अश्वस्य उपरि आगत्य हरिणस्य कण्ठे पाशं योजितवान्।

अनन्तरं तं हरिणं स्वभवनं नीत्वा एकस्मिन् प्रकोष्ठे स्थापयित्वा शयनं कृतवान् गणदेवः।

प्रातःकाले शीघ्रमेव गणदेवस्य निद्राभङ्गः जातः। यतः बहिस्तात् महान् शब्दः श्रूयते स्म। भवनस्य उपरि अशनिः एव पतति वा, भूकम्पः वा किम् इति न ज्ञातवान् गणदेवः। अनुक्षणम् उत्थाय हरिणं यत्र स्थापितवान् आसीत्, तं प्रकोष्ठं गतवान् सः। तत्र सीमन्तिनी सामान्यस्त्रीत्वेन परिवृत्ता आसीत्। तावत्पर्यन्तं सीमन्तिनीम् आक्रान्ताः पिशाचाः तां त्यक्त्वा पलायिताः आसन्। तेषां पिशाचानां गमनस्य एव शब्दः श्रुतः आसीत् गणदेवेन।

अनन्तरं सीमन्तिनी गणदेवस्य परिणयम् अङ्गीकृतवती। ततः तयोः विवाहः वैभवेन सम्पन्नः। तौ उभौ अपि सुखेन बहुकालं जीवितवन्तौ।



# प्रकृतिवैचित्र्याणि –

## शतवर्षेषु एकवारं पुष्यति

बेङ्गलूरुनगरस्य सुविख्याते रक्तोद्याने (लाल्बाग्) शतवर्षीयाः केचन ताडजातीयाः (सेन्चुरी पाँम्) सन्ति। एतस्य शतकस्य आरम्भे ते आरोपिताः आसन्। ऐदम्प्राथम्येन ते वृक्षाः पुष्पिताः सन्ति। एते वृक्षाः सस्यशास्त्रे 'कोरिपा आम्ब्रकूलिफेरा' इति नाम्ना निर्दिश्यन्ते। एवं हि श्रूयते यत् शतवर्षायुष्काः एते वृक्षाः जीवनस्य अन्तिमे काले पुष्पिताः भवन्ति इति। दक्षिणकर्णाटकस्य चामुंडिपर्वतप्रदेशे एतादृशाः ताडवृक्षाः ९० वर्षेषु पुष्पिताः दृष्टाः। मारिशस्द्वीपे स्थितेः 'पांप्लिमौशस् बोटानिकल् गार्डन्' नामके उद्याने स्थिता ताडवृक्षाः (टालिपट् पाँम्) अपि एतस्मिन् एव वर्षे पुष्पिताः दृष्टाः। एतज्जातीयाः वृक्षाः षष्टिवर्षेषु एकवारं पुष्पिताः भवन्ति इति श्रूयते।





## नूरजहाँनामकं पाटलपुष्पम्

पाटलपुष्पाणि आकृत्या एव सुन्दराणि। तेषां नामानि अपि सुन्दराणि एव। अस्मद्देशीयं 'नूरजहाँ'नामकं पाटलपुष्पं नाम्ना स्ववैशिष्ट्येन च प्रसिद्धम् अस्ति। बल्गेरियाजातीयानि पाटलपुष्पाणि अधिकसुगन्ध-रसयुक्तानि इति प्रसिद्धिः अस्ति। किन्तु नूरजहाँनामकानि पाटलपुष्पाणि तु बल्गेरियापुष्पस्य अपेक्षया शतगुणितेन रसेन युक्तानि इति श्रूयते। एषः अंशः 'सेण्ट्रल् इन्स्टिट्यूट् आफ् मेडिसिनल् अण्ड् आरोमेटिक् प्लाण्टस्' नामिकया संस्थया प्रयोगपुरस्सरं प्रमाणीकृतः अस्ति। नूरजहाँनामकात् पाटलपुष्पात् प्राप्तः सुगन्धरसः तेनैव नाम्ना ख्यातः चेत् वरं स्यात्।

# रेखा मिलितवती आसीत्

| | |
|---|---|
| मीनाक्षी-नमस्ते मालति! भवती कुत्रापि गत्वा प्रत्यागच्छन्ती अस्ति इव! | Hallo, Malathy! You seem to be coming from somewhere! |
| मालती- आम्, ग्रन्थालयं प्रति प्रस्थितवती आसम्। किन्तु ....। | Yes, I had gone to the library. But... |
| मी– किं, ग्रन्थालयस्य अद्य विरामः? | Was the library closed? |
| मा– न तथा। ग्रन्थालयसमीपे रेखा मिलितवती। महता अनुरोधेन सा मां स्वगृहं नीतवती। | Not that. I met Rekha near the library. She compelled me to go with her to her house. |
| मी– विद्यारण्यपुरवासिनी रेखा वा? | Is she the one who lives in Vidyaranyapura? |
| मा– आं, सा एव। तस्याः गृहं गत्वा पानीयं पीत्वा जल्पनं कृत्वा यावत् ततः प्रस्थितवती तावता षड्वादनम् अतीतम् आसीत्। | Yes, it is she. We didn't notice time passing as we sat eating, drinking and talking. It was past 6 when I tried to get up. |
| मी– रेखायाः पुत्रः अस्वस्थः आसीत् इति वार्ता आसीत् ....। | I heard from somebody that Rekha's son was ill.... |
| मा– सः इदानीं स्वस्थः। परह्यः सोमवासरतः सः विद्यालयं गच्छन् अस्ति इति उक्तवती रेखा। | He is all right now. Rekha said that he had started going to school from Monday, that is the day before. |
| मी– रेखायाः पुत्र्याः विवाहः कोऽपि निश्चितः वा? | Any alliance has been settled for Rekha's daughter? |
| मा– विवाहः तु न निश्चितः। 'मद्रास्-नगरीयेण केनचित् वरेण पुत्री दृष्टा, अनुमता च। वार्तालापानन्तरं विवाहः निश्चेतव्यः' इति उक्तवती रेखा। | Nothing has been settled. There was a proposal from Madras. The boy and the girl have seen each other. Rekha says that the decision regarding marriage can be taken only after the 'talks'. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

**विजितां शीर्षिकां अक्टोबर्-९२ मासे प्रकटयिष्यामः।**



M. Natarajan



Mahatesh C. Morabad.

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु-५६००८५**

---

## 'जून्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **मुनिमूर्तिस्पर्शात् आत्मानं कृतार्थौ मन्येते।**

द्वितीयचित्रम् - **वृषयानारोहात् बहु सन्तुष्टौ दृश्येते।**

प्रेषिका - जि. कौसल्या, ७७/२ न्यू स्ट्रीट्, मैलापुरम्, मद्रास्-६००००४




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अनुकरोति - | Imitates | पर्व - | Festival |
| अपव्ययः - | Extravagant expenditure | परोक्षम् - | Not face to face |
| अवरुद्धः - | Blocked | पाटलपुष्पम् - | Rose flower |
| आढकी - | A variety of pulse (Toor) | प्रतिघण्टम् - | Once every hour |
| उपसेचनम् - | Chutney (A side-dish) | बुद्धिमत्ता - | Intellect |
| उपायनम् - | Gift | भागिनेयी - | Sister's daughter |
| एकैकशः - | One by one | भृष्ट्वा - | Having fried |
| कारवेल्लम् - | Bitter-gourd | मकरः - | Crocodile |
| कारागारम् - | Prison | मण्डूकः - | Frog |
| कृपणः - | Miser | मन्दमतिः - | Dull-headed |
| क्वथितम् - | A soup-like preparation | मस्तिष्कम् - | Brain |
| खञ्जता - | Lameness | रोम - | The hairs on one's body |
| चूर्णम् - | Powder | व्यञ्जनम् - | Curry |
| छिन्नवान् - | Intersected | व्यामः - | A measure of length |
| तल्पम् - | Soft bed | शस्त्रचिकित्सा - | Surgical treatment |
| दर्पणः - | Mirror | शाटिका - | Saree |
| नाविकः - | Boatman | शुश्रूषा - | Service |
| निर्वर्तितः - | Fulfilled | स्कन्धः - | Shoulder |
| निर्वाचितः - | Elected | हरिणः - | Deer |
| नौकाघट्टः - | Boathouse | हस्तघटी - | Wrist watch |

* ** *

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा




**प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में—**
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
**—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती**

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 105.00   वायु सेवा से रु. **252.00**

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,
पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 111.00   वायु सेवा से रु. **252.00**

**अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:**

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

